संसारातापसंतप्तैस्तपोऽत्र क्रियतेऽनघम्।
तच्छात्यर्थं वदत्यार्य उपसर्गजयं तपः ॥७४॥

तपसोदयमानीय हत्वा कर्म पुरार्जितम् ।
आवा,चेदागत तदभ्युदय लाभोऽत्र नान्यथा ॥७५॥

यस्मिन् देशे क्षणे कर्म्मोदयाज्जात सुखासुखम्।
अवश्य तच्च भांक्तव्यं हर्ष-शोकेन किं सताम् ॥७६॥

अनंतागान्यतीतानि संसारेऽत्र यथावयोः ।
तथैवाद्य तु [1]चावाम्या रक्षणीया शुभा गुणाः ॥७७॥

धर्मादृते शरण्यो न कोप्यसातोदयान्नृणाम् ।
अत· कार्य शरण्योऽसौ यत्नात् सिद्ध्यै मया त्वया ॥७८॥

भ्रातुर्वच [2] समाकर्ण्य वभाषे भगिनी वच· ।
परोक्ष किमिद भ्रातर्न प्रयात्यद्यपूर्वकृत् ॥७९॥

श्वानादिकभवे यच्च दु ख भुक्त निरतरम् ।
नत् किं नो[3] विस्मृत कर्मपाकाज्जातमिद हि किम् ॥८०॥

उपसर्गेण योऽस्माक ह्यनताशर्मकारणम् ।
हंति प्राक्तन दुष्कर्म स भ्राता कृत्रिमो महान् ॥८१॥

क्वचित्सूर्यस्त्यजेद्धाम स्थिरत्वं चासुराचल· ।
तथापि न श्चलेच्चित्त नार्हड्घ्रौ प्रतिष्ठितम् ॥८२॥

सप्तधातुमय देह 'दूरीकृत्यानयेच्छुभम्।
यो मह्यमृद्धिसपन्न तस्य को' विप्रियं वदेत् ॥८३॥

इत्यन्योन्य सुनिर्विण्णौ विवेकान्वितमानसौ ।
प्राप्तौ तद्गृहमाश्वाशयं तौ तौ स्ववचोऽमृतैः ॥८४॥

सर्वदु·खाकरीभूतं बीभत्सं च भयानकम्।
कारागारनिभ घोर यमस्थानमिवापरम ॥८५॥

---

१. क ख ग. तथैनद्धातु चावाभ्याम् ।
२. क ख. ग. भ्रातृवचः ।
३. क. ते ।

खगहस्तं[1]र्नृपस्तत्र दुष्प्रेक्ष्यः पशुराशिभिः ।
भृत्यस्वजनमध्यस्थैर्दृष्टस्ताभ्यां तदा समम् ॥८६॥
ततोऽतिनिर्भयो वाग्मी नृप प्रति विदांवर. ।
आशीर्वादं सुवाण्येनमाह संबोधहेतवे[2] ॥८७॥
राज्य क्षोणारिचक्रं नवनिधि बहुधा रत्नदेव्यादिपूर्णम् ।
सपत्त्रैलोक्यजाता त्रिभुवनपतिभि. सेविता प्राप्यतेऽत्र ।
पुण्या धीर्यत्प्रसादाद्विबुधजननता साऽस्तुते धर्मवृद्धिः ।
सौख्य तीर्थेशशक्रपदजनितमतिक्रान्तपाप शिव च ॥८८॥
अपश्यत् तौ नृपो यत्नात्साश्चर्यो लक्षणाङ्कितौ ।
सुदर्शिकमतोमस्तकाग्र्यं सामुद्रिकान्वितौ ॥८९॥
किमिमौ रतिकदर्पौ सशरीराविहागतौ ।
किंवाऽमृतभुजौ किं वा सुंदरौ खचरात्मजौ ॥९०॥
[किमुवा भागिनेयौ मे[3]] जातौ जैनमते यतो ।
यतो[मे]निर्दयस्यासीन्मन. स्नेहपरायणम् ॥९१॥
अथवा किं वृथालापैरहं पृच्छामि तौ प्रति ।
वृत्तान्त येन मे नश्येत् सशयो मनसोद्भुतम ॥९२॥
कौ भवतौ च [कुत ][4] कस्मादिहागतौ केन हेतुना ।
बाल्येऽपि कृतमत्यन्त साहस वृत्तगोचरम् ॥९३॥
ब्रह्मचारी ततोऽवादीद् यथाधस्याग्रनर्तकम् ।
गान च बधिरस्यापि[ग्र][5] धर्माख्यान च रागिण. ॥९४॥

---

१ ख. ग. खड्गहस्तो ।
२ घ. सुवाण्येव महासंबोधहेतवे ।
३. क. ख. ग. मेऽथवा किमु भाग्नेयो [भागिनेयौ]" —मात्रादोषः
४. मात्रादोष ।
५. अस्पष्टार्थः ।

वृद्धस्य तरुणीदानं भवेद्व्यर्थं तथा मम ।
राजंस्तेऽघादिपूर्णस्य रौद्रध्यानपरायणः ॥९५॥

मदीयं पावनं रम्यं चरित्रं धर्मकारणम् ।
संवेगजननं पापभीतिदं च निरूपितम् ॥९६॥

श्रुत्वा तद्वचनं राजा त्यक्त्वा खगं प्रशांतधीः ।
तच्छ्रोतुं परिवारेण [सहाऽभूत् सांजलिस्तदा[1]] ॥९७॥

ततः प्रचक्रमे वक्तुं क्षुल्लकोऽनेकशास्त्रवित् ।
मनोहरगिरा स्वस्य वृत्तं तद्बोधहेतवे ॥९८॥

यद्भुक्तं स्वयमेव कर्मजफलं दुर्मार्गजातं महद्-
दुःखं घोरतरं मया गतभवे सार्धं चिरं चैतया ।
दक्षैः संसृतमेतदेव निखिलं बुध्दं च यद्धेतुना,
तत्सर्वं हि निगद्यमानमधुना शृण्वंतु संतोऽखिलाः ॥९९॥

नाभेयादिजिनेश्वरान्मुनिनुतान् नाकाधिपैः पूजिता-
नतातीतगुणार्णवान् सुविमलान् विश्वप्रकाशात्मकान् ।
संसाराबुधितारकान्भवभृतां बध्यमान् स्वामिनो
वंदे तद्गुणहेतवेऽत्र शिरसा मुक्त्यंगनारागिणः ॥१००॥

इति यशोधरचरित्रे भट्टारकश्रीसकलकीर्तिविरचिते
क्षुल्लक-युगलमारिदत्तपार्श्वानयनवर्णनो
नाम प्रथमः सर्गः ।

---

१ क ख ग घ. सहसांजलिरभूत्तदा ।

## द्वितीयः सर्गः

सर्वव्रतमय देवं विश्वसद्व्रतदेशिनम् ।
समस्तव्रतसंसिद्ध्यै वंदेऽहं मुनिसुव्रतम् ।।१।।
अथात्र भारतेऽवंतीविषयोस्ति मनोहरः ।
धनधान्यादिभिः पूर्णो धर्माढ्यो धार्मिकैर्भृतः ।।२।।
सुधाभुजोऽपि यत्रोच्चैर्मुक्तिसाधनहेतवे ।
जन्मेच्छति सुनिर्विण्णास्तस्य का वर्णनाऽपरा ।।३।।

केवलज्ञानिनो यत्र संघेन महता समम् ।
सतां धर्मोपदेशाय विहरंति सुरार्च्चिताः ।।४।।

खेचरा नाकिनो यत्र मुनीनां तीर्थदेशिनाम् ।
ज्ञानोत्पत्तौ च निर्वाणे [पूजनाय प्रयाति च[1]] ।।५।।

अनेकफलपुष्पादिनम्रे यत्र मनोहरे ।
वने कुर्वंति सद्ध्यानं केचिच्च मुनिसत्तमाः ।।६।।

ज्ञानाभ्यास बुधाः केचित् कृत्स्नेंद्रियमनोदमम् ।
त्यक्त्वा देह च व्युत्सर्गं केचिन्मुक्तिप्रियाप्तये ।।७।।
ग्रामे-ग्रामे विभात्यत्र चैत्यगाराः मनोहराः ।
ध्वजै कूटाग्रगैर्गीतनृत्यैर्धर्माध्वयो यथा[2] ।।८।।
तत्रत्याः सुजनाः केचिद्दीक्षया याति निर्वृतिम् ।
हत्वा कर्माणि केचिच्च स्वहमिन्द्रपद दिवम् ।।९।।
केचित् सुपात्रदानेन भोगभूमि नरोत्तमाः ।
केचित्पूर्वविदेहे च लभन्ते भूजुजा कुलम् ।।१०।।
धार्मिका नाकिनो यत्र लभंते जन्मसत्कुले ।

---

१. क ख. ग. घ. प्रयान्ति पूजनाय च—मात्रादोषः ।
२. क ख. ग. घ. नृत्यैर्धर्माब्धयो यथा ।

[1]केचिन्निरस्तकर्माण· सिद्ध्यै धर्मार्जनाय वै ॥११॥
तस्मिन्मध्ये भवेद्रम्या श्रीमदुज्जयिनी पुरी ।
सुधार्मिकजनै. पूर्णा धन-धान्यसुखाकरी ॥१२॥
ससालगोपुरैस्तुगैर्दीर्घ-खातिकया च या ।
अलंघ्या शत्रुभिर्मात्ययोध्ये[वामार][2]केतुभि. ॥१३॥
वसन्ति त्यागिनो यस्या शूरा सद्व्रतशालिनः ।
नरा[3]नार्योऽतिरूपाढ्याः शीलाभरणमडिताः ॥१४॥
या बभौ चैत्यसद्गेह[कूटोत्केतु][4] पाणिभि. ।
स्वर्मुक्तिधर्मसिद्ध्यर्थमाह्वयंतीव नाकिनाम् ॥१५॥
आगच्छन्त्यो व्रजन्त्यश्च रूपाढ्या दिव्ययोषितः ।
पूजनाय जिनागार भान्ति [देवागना, इव][5] ॥१६॥
पश्यति स्वगृहद्वार पात्रदानाय दानिन. ।
केचित्पात्राय दत्वान्न प्रापुराश्चर्यपचकम् ॥१७॥
केचिद्दृष्ट्वा तदाश्चर्यं पात्रदाने मति व्यधु· ।
किचिदप्राप्य सत्पात्र विषाद याति दानिनः ॥१८॥
तत्रोत्पन्ना जना केचित्तपसा प्राप्य केवलम् ।
धर्म प्रकाश्य लोकाना प्रजग्मु शाश्वतं पदम् ॥१९॥
केचिद्दीक्षार्जिता येन वा पंचानुत्तर ययु ।
केचिद्ग्रैवेयक केचिच्छक्रत्व सुरपूजितम् ॥२०॥
केचिद्गृहिव्रतेनैव दिव षोडशमावधिम् ।
व्यगु सत्पात्रदानेन केचिद्भोगाकितां धराम् ॥२३॥
यत्रोत्पत्ति लभतेऽहो पूर्वार्जितशुभा सुराः ।
मुक्ता ये क्षिप्तकर्माण केचिद्धर्माय सत्कुले ॥२२॥

---

१ क ख घ केचिच्च क्षिप्तकर्माणः ।
२ क ख ग घ. ··योध्येव धामकेतुभि.—मात्रादोष अस्पष्टश्च ।
३ क ख. ग घ नरो (ना नरो नर) ।
४ क ख ग घ कूटाग्रकेतुपाणिभिः—मात्रादोष. ।
५ क ख ग घ. भान्त्यमरागना इव—मात्रादोषः ।

इत्यादि वर्णनोपेतः पुर्यां भूपशिरोमणिः।
कीर्त्यौघाख्यो नृपः ख्यातः कीर्तिव्याप्तदिगाननः ॥२३॥

त्यागी भोगी व्रती दक्षो नीतिमार्गविशारदः।
व्रतादिसद्‌गुणोपेतो जिनभक्तो दयार्द्रधीः ॥२४॥

श्री जिने[1]न्द्ररतो नित्य निर्ग्रंथगुरुसेवकः।
लसदाभरणैर्वस्त्रैः संपदाभा दिवामरः ॥२५॥

तस्य चन्द्रमती नाम्ना [समभूत्[2]] सुप्रिया शुभा।
रूपलावण्याब्धिर्वा चेलाभरणभण्डिता ॥२६॥

तयोः सद्‌यौवने भूप बभूवाह् सुतोऽग्रिमः।
यशोधराऽभिधाख्यातो यशसा सुदराकृतिः ॥२७॥

महामह विधायोच्चैरभिषेकपुरस्सरम्।
जिनागारे जिनेंद्राणां विश्वाभ्युदयकारणम ॥२८॥

दीनानाथ जनेभ्योऽपि बदीभ्यो बहुधा नृपः।
दत्वा दान स्वपुत्रस्याऽकरोज्जन्ममहोत्सवम् ॥२९॥

स्वजनाना च भृत्याना प्रजाना स्वामिसंभवात्।
तदाऽभूत्केतुमालाभिः पुर्यां च प्रमदोत्सव ॥३०॥

चन्द्ररेखेव स प्राप क्रमाद्‌वृद्धि स्वरूपवान्।
बालयोग्यै.[3] पय.पानैश्चान्नैः शुश्रूषया शुभैः ॥३१॥

ततोऽथास्य कुमारत्वं दिव्याबरविभूषणैः।
दीप्त्या कात्या सुवाण्या स भाति [देव[4]] कुमारवत् ॥३२॥

देव-शास्त्र-मुनीन्द्राणा कृत्वा सत्[5]पूजन शुभम्।
जिने समर्पितः पुत्रो लग्नसस्कारपूर्वकम् ॥३३॥

---

१. क. श्री जिनेज्या···
२. क. ख. ग घ. वभूव—मात्रादोष.।
३. क. ख. ग. घ. बालयोग्य···
४. क. ख. ग. घ. स भाति सुरकुमारवत्—मात्रादोष।
५. क. ख. ग. घ. विधाय···मात्रादोष.।

पठनार्थं सुजैनोपाध्यायस्य सन्महोत्सवम् ।
कृत्वा प्रज्ञा सुबुद्धीनां वृद्ध्ये भूभुजा मुदा ॥३४॥[1]
ततोऽल्पाहोभिरेवासौ विनयेन श्रियागमत् ।
पार शास्त्रार्थविद्यास्त्रकलाब्धेश्च सुबुद्धिमान् ॥३५॥
ज्ञान-विज्ञानसपन्न यौवनान्वितविग्रहम् ।
दृष्ट्वा त तद्विवाहायाकरोच्चिन्ता नरेश्वरः ॥३६॥
अथ कश्चित्सभास्थाने दूतोऽप्यागत्य भूपतिम् ।
नत्वा वक्ति स्वकार्यार्थं प्रतीहारप्रवेशितः ॥३७॥
देवास्ति भूपति. ख्यातो नाम्ना विमलवाहनः ।
वाराटाख्ये शुभे देशे शीलाख्या तस्य वल्लभा ॥३८॥
तयो रूपादिसपन्ना दिव्यलक्षणलक्षिता ।
रम्याऽमृता महादेवी सुताऽभूत् सुदराकृतिः ॥३९॥
यशोधरकुमाराय तां पुत्री दातुमिच्छति ।
अत्रानीय तवादेशश्चेदस्ति नृपसत्तम ॥४०॥
इत्युक्त्वा जोषमेवागाच्चिन्तयित्वा नृपो हृदि ।
योग्यसंबधमेवात्रैवम[2]स्त्वित्यवदन्मुदा ॥४१॥
विवाहवासर पृष्ट्वा सानन्दस्त्वरितान्वित ।
प्राप्य स्व[3]स्वामिन कार्यसिद्धिमेवाप्यबूबुधत् ॥४२॥
आदाय स्वसुतां राजा स्वय भूत्या विनिर्ययौ ।
कतिभिर्वासरैरेत्य तत्पुरोद्यानमास्थितः ॥४३॥
तत्रस्थस्यापि यद्योग्यं प्राघूर्णकक्रियादिकम् ।
तत्सर्व योग्यसामाग्र्[4]या विहित भूभुजा तदा ॥४४॥

---

१ नातिसुस्पष्टभ षा ।
२ क ग मेवात्रैवविमृमीत्यवदत् मुदा ।
३ क ग घ सुस्वामिन ।
४ क ख सामग्रीर्विहित त महीभुजा ।

पुरे चोपवने [तूर्यमंगले[1]]र्ध्वजपंक्तिभिः ।
पक्षद्वय-जनैर्लोकैः कृता शोभा च सुन्दरा ॥४५॥
विधाय पूजनं पूर्वमभिषेकपुरस्सरम् ।
जिनागारे जिनेशानां महाभ्युदयसाधनम् ॥४६॥
कृत्वा स्नानं पुरध्रीभिर्भूषयित्वा विभूषणैः ।
दिव्यांबरैश्च मालाढ्यैश्चंदनाढ्यैः स्वमात्मना ॥४७॥
गीतनृत्यमहोत्साहै बहुतूर्यैर्महाश्रिया ।
मुदा गंतु प्रवृत्तोऽहं तदुद्यानं नृपावृत ॥४८॥
ततस्तत्र मया दृष्ट्वा राजन् सा सुंदरी प्रिया ।
दिव्यांबरधरा रम्या भूषाढ्या श्रीरिवापरा ॥४९॥
पुरोहितेन[2] तत्पाणिं तदाहं ग्राहितो मुदा ।
मया सा विधिवद्भूत्या परिणीताग्निसाक्षिकम् ॥५०॥
बंधु-सामंतलोकाद्या दीनानाथ जनास्तदा ।
वस्त्राभरणसन्मानैर्मुदा संतर्पिता मया ॥५१॥
ततो भार्यां समादाय भूत्या पुण्यफल नृणाम् ।
दर्शयित्वा नृनेत्राणां कुर्वन्प्रीतिं पदे पदे[3] ॥५२॥
प्रविश्य स्वपुरं सार्धं स्वजनैर्भूरिभूमिपैः ।
संप्राप्तोऽहं निजागार धनश्रियालंकृतस्तदा ॥५३॥
एव निर्वर्त्य कल्याणं मन्मानः स्वप्रियान्वितः ।
ययौ स्वपुरमेवाति प्रीतिर्योग्यविवाहतः ॥ ५४ ॥
एव पंचशतान्येव परिणीता पुण्योदयात् ।
सर्वाक्ष सुखधात्रीणां सुरामाणां मया क्रमात् ॥ ५५ ॥

---

१. क. ख. ग. घ.···मगलतूर्यै—मात्रादोषः ।

२. घ. परोहितेन ।

३. दर्शयन्चानु नेत्राणां कुर्वंत प्रीतिं पदे पदे ।

निमग्नो ऽहं सुखांभोधौ स्वभार्या [सुखसंभृतः][1] ।
सामंतसेवितः कालं गतं जानामि नो मुदा ॥ ५६ ॥
संवेगदां कथां शृण्वन् साश्चर्यां महती मुदा ।
कुर्वन् पूजा जिनेन्द्राणां भुनज्मि सुखमुल्वणम् ॥ ५७ ॥
अथैकदा मुखं पश्यन्नंतिपतां मणिदर्पणे ।
भृंगाभे केशपाशे स ददर्श पलितं कचम् ॥ ५८ ॥
तेनेति चिंतितं चित्ते ध्वहो लोकैकनिंदिना ।
मृत्यवग्रजा जरा चक्रे स्वपदं मस्तकेऽद्य मे ॥ ५९ ॥
मे ऽथवा धर्मदूतोयमागतो गदितुं शुभा ।
त्वां[3] विजेतुं यमः शत्रुरागमिष्यति निश्चितम् ॥ ६० ॥
तं निवारयितुं यत्नं कुरु शीघ्रं गृहं त्यज ।
तपोऽस्त्रैर्वृत्तसंग्रामभूमिं प्राप्य जयेति वै[4] ॥ ६१ ॥
गृह्णाम्यहं ततो ऽद्यैव दीक्षां मृत्यु[5]क्षयकरीं ।
मुक्ति-रामा-सखीं नूनं हत्वा मोहमहाभटम् ॥ ६२ ॥
यावदायुः क्षयं नागाद्यावदक्षाणि मदताम् ।
प्रापुर्नन्वोद्यमो [6]नश्येत्तावत् कार्यं हितं बुधैः ॥ ६३ ॥
यथाऽग्निज्वलिताद्गेहाद् वित्तं निष्कास्यते जनैः ।
तथा धर्मो गृहीतव्यो जराग्नि-ज्वलिता गतं ॥ ६४ ॥
वृद्धत्वे सति दुःखाढ्यो विश्वपाप निबंधने ।
सर्वचिंताकरे राज्ये मतिमान् को रतिं व्यधात् ॥ ६५ ॥

---

१. क. ख. ग. संवेगजननीमार्हन्ती कथा स शृण्वन्मुदा । घ. रससभृते ।
२. क. ख. भुजन्मि ।
३. विनेतुमित्यर्थ. ।
४. क. ख. वतेति वै ।
५. क. ख. ग. घ. यमक्षयकरी-मात्रादोष. ।
६. क.पश्येत् ।

इन्द्रचापनिभा लक्ष्मी [र्याऽध्रुवा मोहमातृका][1] ।
अतृप्तिजननी निंद्या कथं स्यादरतये सताम् ।। ६६ ।।

शक्रजालसमं सर्वं कुटुंबं पापकारणम् ।
धर्मविघ्नकरं धीमान् तत्कथं[2] रञ्जयेन्मनः ।। ६७ ।।

यमागार वपुर्निन्द्यं सर्वरोगैकभाजनम् ।
कामसर्प्पबिल पुंसां कथं स्याच्चर्मणेऽशुभम् ।। ६८ ।।

कृत्स्न दुःखाकरी भूते निस्सारे पारवर्जिते ।
चतुर्गतिमये दक्षः [ससारेऽस्मिन् रमेत् कः][3] ।। ६९ ।।

बुधा वैषयिक सौख्यं तीव्राऽशर्मनिबंधनम् ।
काल कूटादिहामुत्र प्राहु श्वभ्रगृहागणम् ।। ७० ।।

दैवादग्निर्व्रजेत्तृप्तिमिंधनैव सरित्पतिः ।
नदीपूरैर्न च प्राणी सौख्ये वैषयकैः क्वचित् ।। ७१ ।।

यत्किंचित्कर्मणा जातं संसृतौ विग्रहादिकम् ।
फेनोपम च तत्सर्वं निस्सारं चञ्चलं नृणाम् ।। ७२ ।।

मत्वेति प्राक्तनाश्चक्रिजिनेशादिनरोत्तमाः ।
त्यक्त्वा राज्यादिक घोर तपसाऽगुः स्फुट शिवम् ।। ७३ ।।

चिंतयेन्मानसे नित्याद्यनुत्प्रेक्षाः स धीधनः ।
मुहुः ससारवैचित्र्य शरण्य मोक्षमेव च ।। ७४ ।।

इत्यादि चिंतनात्कीर्त्यो धभूपस्य धनादिषु ।
वैराग्यं द्विगुण जात काल-लब्ध्या हृदि स्वयम् ।। ७५ ।।

ततो भूत्या स्व राज्यं मे समर्प्य विधिना नृपः ।
द्विधा संग परित्यज्य दीक्षा जैनेश्वरी श्रितः ।। ७६ ।।

कुर्वं स्तपोऽनद्यं ज्ञानाभ्यास ध्यानं स्वनिग्रहम् ।
कषायविजयं सोऽनुदेशांश्च विहरेत्सदा ।। ७७ ।।

---

१. क. ख. ग. घ. लक्ष्मीरध्रुवा- मात्रादोषः ।
२. क. ख. ग. घ. तां कथं ।
३. क. ख. ग. घ. संसारे को रतिं दधे—दोषः ।

ततो मे प्राक् पुण्योदयाद्वृध्दिमप्यगुस्तदा ।
स्याश्चव हस्तिपादाति[1]-कोश-भू-सपदादय : ।। ७८ ।।

ततो ऽमृत-महादेवो प्रसूता यौवने सुतम् ।
ज्येष्ठं यशोमति नाम्ना रूपाढ्य चारुलक्षणम् ।। ७९ ।।

द्वितीया-चंद्रवत् सोऽनुवृद्धि तद्योग्यभोजनैः ।
चाप्य बुध्दि कुमारत्व कृतविद्या परिग्रहः ।। ८० ।।

राजकन्याशतं प्राप्य विधिना पुण्यपाकत· ।
आसाद्य यौवन रम्य भुक्ते शर्म यशोमति. ।। ८१ ।।

भुंजानोऽह तदा राजन्सुख तृप्तिकर समम् ।
स्वरामाभिर्न जानामि गत काल नृपावृतः ।। ८२ ।।

सामंता बहवो नमति चरणौ भूपाश्च मूर्ध्ना मम,
जित्वारीन् घनसगरेति विषमे व्यक्त प्रतातकृतम् ।
लोकेत्वत्र मया स्वपूर्वसुकृतपाकान्नृपं. सेवितो-
ऽह राज्यं प्रविधाय व निजवशे मग्नः सशर्माम्बुधौ ।। ८३ ।।

अखिलभुवनसेव्यान्सर्वलोकाऽग्रभूत्या--
न्निरुपम-सुखयुक्तास्त्यक्तससारदु.खान् ।
वर-वसु-गुणभूषान्ज्ञानदेहान्विसिद्ध्यै,
ह्यचलविभवपूर्णान् सस्तुवे सिद्धनाथान् ।। ८४ ।।

इति भट्टारक'सकलकीर्ति-विरचिते यशोधरचरित्रे
यशोधर-विवाह-राज्यलाभ-वर्णनो
नाम द्वितीय सर्ग ।।२।।

---

1. पदातीना समूह पादातम् :

## तृतीय. सर्गः

वर्द्धमानं जिनाधीश विश्ववद्य जगद्धितम् ।
सार्थनामानमेवाहं वदे सिद्ध्यै कृपाकरम् ॥ १ ॥
अथान्यदा सभामध्ये स्थितो हर्म्यासने हृदि ।
अमृतादि-महादेवीं [सस्मरन् मदनातुरः[1]] ॥ २ ॥
तल्लावण्य-कलाकर-भूषादिगुणचिंतनात् ।
तदासक्तिर्बभूवातिकामदाहप्रदा मम ॥ ३ ॥
ततो मयेति सध्यात दत्वा राज्य स्वसूनवे ।
यथेष्ट मानयिष्यामि सदा भोगास्तया समम् ॥ ४ ॥
यथात्र लोकसतापो नाथ ततति पातत ।
तथात्र पनिनो भानुरस्ताद्रेः परगोऽभनात् ॥ ५ ॥
यस्मिन् स्थाने गतोऽस्त स तस्मिन्सर्वे यतीश्वराः ।
कायोत्सर्गं व्यधुर्धीराः कृत्स्न-सत्वदयाप्तये ॥ ६ ॥
केचित्सामायिकासन्ना बभूवुर्गृहनायका ।
धर्मध्यानरतास्तस्मिन्काले स्वमुक्तिहेतवे ॥ ७ ॥
केचिद्धर्मगुणोपेतास्त्यक्त्वा देह प्रमुक्तये ।
व्युत्सर्गं स्वाघनाशाय कुर्युर्मोक्षसुखार्णवम् ॥ ८ ॥
जपंतिस्म नमस्कारान् गुरुपचकनामजान् ।
कृत्स्न-विघ्नहरान्केचिन्नित्याभ्युदयसाधकान् ॥ ९ ॥
केचिच्चित्त स्थिरीकृत्य कुर्युर्ध्यान जिनेशिनाम् ।
दृढासना विवेकज्ञा कर्म-कक्ष-हुताशनम् ॥ १० ॥
यथा कैवल्य-व्युच्छित्तौ पठ्यंतेऽगानि सज्जनै ।
पदार्था लोकनाथाय तथा दोषा प्रबोधिता: ॥ ११ ॥

---

१. क. ख. ग. घ. स्मराम्यहं स्मरातुरः—भाषादोषः व्याकरणदोषश्च ।

सन्मार्गदर्शनायात्र कालादौ तीर्थनायकः ।
उत्पद्यते यथा चन्द्रो ध्वान्तहान्यै समुद्गत. ॥ १२ ॥
विहृत्य च मही यद्वत् हन्त्यज्ञानतमो जिन ।
स्ववचोरश्मिभिस्तद्वत्किरणैश्चन्द्रमास्तमः ॥ १३ ॥
मिथ्यात्व-ध्वान्त-निर्धूते यथाऽगुः सौख्यता जनः ।
जिनेशिना तथा चन्द्रमसोद्धूते तमश्चये ॥ १४ ॥
एव मिद्धाशुभिर्लोके सितिमानमुपागते ।
सभाजना निजावासानगुर्द्वारस्थविसर्जिता ॥ १५ ॥
ततः कामसुखाकांक्षी महादेवीगृह मुदा ।
अष्टभूमियुतं गतु प्रवृत्तोऽह रतीच्छया ॥ १६ ॥
तस्याद्य द्वारमासाद्य तुग चित्रकर वरम् ।
प्रतोहारो मया दृष्टा जयशब्दादि सूचिका ॥ १७ ॥
तत्प्रकोष्ठ समालम्ब्य सूक्ष्मांशुक-समावृतम् ।
लोलयाढ्योऽति रागाढ्य प्रविष्टोत स्वपाणिना ॥ १८ ॥
विचित्रोज्ज्वल[सकर्प्लास्ता[1]] सुसोपान-मालिका. ।
रम्या दीप्ता समारुह्य त्यक्त्वा [वै[2]] सप्तकुट्टिमान् ॥ १९ ॥
शुद्धस्फटिकसंजातमष्टम वरकुट्टिमम् ।
आरूढोऽह कृतालोक नानादीपैर्मनोहरम् ॥ २० ॥
मदागम परिज्ञाय कुब्जवामनिकादिभि ।
तस्माद्विनिर्गता राज्ञी कुर्वती मे जयस्वनम् ॥ २१ ॥
मनोहरतरा कान्तामादाय स्वकरे मुदा ।
शुक्लोरुमृदुबाहुल्यं शयनीयमुपाश्रित ॥ २२ ॥
ततस्तया समं भुक्त्वा कामभोगाननेकश ।
हन्त्वा कामज्वर प्राप्तो निवृत्ति चेतसाप्यहम् ॥ २३ ॥

---

१. क. ख ग घ संनिभिताः ।
२. क. ख ग घ 'च' मात्रादोषो ।

भुजपंजरमध्यस्थां कृत्वा तां मृगलोचनाम् ।
तत्र रत्यवसाने ऽहं प्रक्रमे शयितु तदा ॥ २४ ॥

तद्रूपादिसुसौंदर्यं [चिन्तामग्नस्य[1]] मे मनाक् ।
नायान्निद्रातिकामादि प्राप्तनिर्वृतिचेतस ॥ २५ ॥

अथ ज्ञात्वाशु सा कांता मां सुप्त भुजपजरात् ।
निर्गता दुष्टचेष्टाढ्या निर्मोकादिव सर्पिणी ॥ २६ ॥

कपाटयुग्मयो सोद्घाटनं कृत्वा ततो वहि ।
निश्चक्रामातिनिर्लज्जा वस्त्रालकारधारिणी ॥ २७ ॥

ततो मयेति सध्यात राजन्विस्मितचेतसा ।
यामिन्यर्द्धगते क्वेय गतु [स्यादुद्यता[2]] ऽधुना ॥ २८ ॥

सेर्ष्यो ऽह ऽड्गमादाय [स्वयमन्धपटावृत[3]] ।
गत्वा तदनुपादं हि सद्मद्वारि रुषास्थित ॥ २९ ॥

ततो दृष्टा मया राज्ञी पादमूलमुपाश्रिता ।
[खंजस्य कोलकेश्यस्य क्लेशित पापिन खला[4]] ॥ ३० ॥

कुसस्थानास्थिमात्रस्य करालास्यास्य कुष्ठिनः ।
बहुदोषनिधानस्य ककालाकृतिधारिण ॥ ३१ ॥

तदंघ्रिमर्दन कृत्वोत्थापितः स शनैस्तया ।
तेन साऽतिरुषा कृष्टा केशपाशे विरागत ॥ ३२ ॥

तद्विलोक्यातिवैचित्र्य स्वशिरो विधुत मया ।
अहो इद महच्चित्र क्वेय कार्यमिति ब्रुवन् ॥ ३३ ॥

---

१. क. ख. ग. घ चिन्तमानस्य ।

२. क. ख. ग घ समुद्यता ।

३. क. ख. ग. घ. प्रावृत्यांधपटेन स्वम् ।

४. क. ख. ग. घ. खजस्य क्लेशिनः कोलकेश्यस्य पापिनः खलाः—मात्रादोषः अभिव्यक्तिदोषश्च ।

तयोर्वधाय चोत्खातो मयाखड्गो रुषाक्ता ।
तेजसाढ्य पुनर्दृष्टवा त हेति हृदि चिंतितम्[1] ॥३४॥
महारणेऽरिचक्रं येनाशु ससाधितं कथम् ।
वधायास्यातिदानस्याकृष्टः सोऽसिर्मया क्रुधा ॥३५॥
पूर्वं मयादराद्यत्र मन्मानेन समर्पिता ।
यौवने जनित पुत्रो यया मे संन्निभो गुणै ॥३६॥
तां हन्तु मे कृतेच्छस्य कथ स्थान्न यशो महत् ।
[स्त्री[2]]हत्यादिभवो दोषो लज्जा च तद्विघातनात् ॥३७॥
मत्वेत्यासि परित्यज्य पतित्वा शयनोदरे ।
गत्वा त्वह विषण्णात्मा भूयश्चैवं विचितयन् ॥३८॥
कृत्स्नदु खाकरोभूता रामाऽधर्मखनी खला ।
स्वर्गधामार्गला दुष्टा नि शषानर्थकारिणी ॥३९॥
श्वभ्रवेश्म प्रतोलीयं नृवचनकुपडिता ।
परप्रेमधरा पापा कपटादिशताकरा ॥४०॥
मायावल्ली धियाहीना धर्म्मसद्रत्नतस्करी ।
पुसा सा बधने पाशश्च खला [रज्जुसनिभा[3]] ॥४१॥
वेदनैव महाशर्मदायिनी दुष्टमानसा ।
दानस्नेहांश्च तीवात्र शफरीवातिचचला ॥४२॥
कामाग्निदहने सेंधनोपमा कुटिलानना ।
संसारकारणा नारी मुक्तिकान्तातिभीतिदा ॥४३॥
हृद्यन्य धारयेद्दुष्टा वाचा मन्येन सा वदेत् ।
कायेनाप्य पर भुक्ते पापाढ्या श्वभ्रगामिनी ॥४४॥

---

१. क. ख. ग. घ —चिन्तितम् हृदि ।

२. क. भत्रे दोष लज्जा च ।

३. क. ख. ग. घ. पुसा सा बधने पाशश्च खलारज्जसन्निभा ।

स्त्रियः कायेऽत्र किं सारं चर्म्मबद्धास्थिसंचये ।
निसर्गकुणिपे निंद्ये शुक्रशोणितसंभवे ॥४५॥
मुखे श्लेषमादिसपूर्णे विष्टादिनिचितोदरे ।
स्वभ्ररंध्राकृतौ योनौ को ज्ञानी रतिमादधे ॥४६॥
सप्तधातुमयेऽभ्यतराशुच्येकनिधानके ।
गौरचर्म्मावृते बाह्ये वस्त्राभरणमंडिते ॥४७॥
कामज्वरवता पुंसा चक्षुषा लोभदायिनि ।
श्रवनमूत्रादिके काये धीमता स्यात्कुतो रतिः ॥४८॥
कामाग्नेर्मैथुनेनैव शांति वांछंति ये शठाः ।
तैलेनात्रानल ते निवारयंति स्मरातुरा ॥४९॥
स्त्रीकायमथनोत्पन्नमतृप्तिजनक सताम् ।
कथ स्याद्व्रतयेनिंद्य बीभत्स मैथुन भुवि ॥५०॥
भोगान् पचेंद्रियोत्पन्नान्दु खपूर्वांश्च दुस्त्यजान् ।
अनन्तभवहेतून् क सेवतेऽत्र सुधी खलान् ॥५१॥
यस्या. स्नेहेन संजातो गृहस्थोऽहं स्मरांधधी. ।
तस्या· स्नेहो मया दृष्ट इदानीं कुब्जकेऽधमे ॥५२॥
अतोऽलं मेऽत्र ससारसुखेनाशर्म्महेतुना ।
गृहाश्रमेण पापार्थिनातिदु खाकरेण च ॥५३॥
तथा श्वभ्रप्रतोल्या मे पूर्यतां रामयाऽनया ।
रजो निभेन राज्येन श्रिया चचलयाऽपि च ॥५४॥
धन्या हि प्राक्तनास्त्यक्त्वा मायाजालमिद बुधा. ।
गृहोद्भव वन प्रापुर्दीक्षायै मुक्तिकांक्षिण ॥५५॥
अहं ज्ञानासिना हत्वा स्मर मोहभट खलम् ।
जिनमुद्रां गृहीष्यामि प्रभाते मुक्तिदूतिकाम् ॥५६॥
एव दीक्षोद्यतो यावद्वैराग्यान्वितमानसः ।
विरक्त कामभोगेष राजंस्तिष्ठामि सद्धीः ॥५७॥

तावदागत्यकामान्धा विस्मयोद्वेगकारिणी ।
परप्रेमालसा दुष्टा साविशन्मे भुजांतरे ॥५८॥
ततो ध्यात मयेत्येकं एतया साहस कृतम् ।
निर्गच्छंत्या विशत्यानु द्वितोय ह्यद्भुतं महत्[1] ॥५९॥
एवं चिंतयतो जात संवेगो द्विगुणो मम ।
स्वर्गमुक्तिकरो मान्य सतां च कृत्स्नवस्तुषु ॥६०॥
तदगस्पर्शनं वज्रकंटकेन समं तदा ।
भासते मे विवेकाढ्ये हृदि रागातिगे शुभे ॥६१॥
गृहीतव्यं तपो घोर दुष्कर्मेंधनदाहकम् ।
प्रभातेऽत्र मयावश्यं चेम त्यक्त्वा गृहाश्रमम् ॥६२॥
ममैव ध्यायतो धीर साधुकार वदन्निव ।
प्राभातिक. समुत्तस्थे तुर्यगीतादिजो ध्वनि. ॥६३॥
मदन्ते माग॰ा: पेठुस्ततः प्रोच्चै· कलस्वना· ।
प्राभातिक-सुमागत्यान्मत्प्रबोधाय तत्क्षणम् ॥६४॥
उत्थाय शयनाद्राजन् धार्म्मिका धर्महेतवे ।
धर्म्मध्यान व्यधु: सामायिकादिकभव द्रुतम् ॥६५॥
[2]जिने प्रोद्गते यद्वद्युर्म्मया याति निष्प्रभम् ।
तथा सूर्येऽप्यगाच्चेन्द्रः समस्तजनचक्षुषि ॥६६॥
सतां मनोम्बुजान्यत्र विकासयति तीर्थराट् ।
यथाबुजानि चादित्यो विश्वाह्लादी समुगद्तः ॥६७॥
मिथ्याज्ञानतमो हत्वा सन्मार्गसदृशां भुवि ।
दर्शयित्वेव तीर्थेशो यथा भानुस्तथोतद्ग ॥६८॥
अतो राजन्समुत्थाय शयनात्तं सुखार्णवम् ।
धर्मध्यानं यथायोग्य कुरु देवस्तवादिजम् ॥६९॥

---

१. क. ख. ग. घ. द्वितीयमद्भुत महत् ।
२. जिनसूर्ये, क. जिनेन प्रोद्गते ।

धर्मोऽनेक सुखाकरो गुणनिधिर्धर्मं व्यधुर्द्धामिकाः
धर्मेणाशु विलभ्यतेऽखिलसुख धर्म्माय मुक्त्यै नमः ।
धर्मान्नास्ति हितकरोऽपरजनो धर्मस्य मूलं मन,
शुद्धिस्त्व हि ददस्व चित्तमनिश धर्मे स तेऽव्यान्नृप ॥७०॥

पंचाचारमपारसौख्यसदनं ये प्राचरंति स्वयम्,
शिष्याणा मुनिनायकाः शिवकरा आचारयंत्येव च ।
तेषा पादसरोरुहानघहरानाचारशुद्ध्यै सदा,
सूरीणा प्रणमामि भक्तिसहितो मूर्ध्नाघशात्यै मुदा ॥७१॥

इति भट्टारक-सकलकीर्ति-विरचिते यशोधरवैराग्योत्पत्तिवर्णनो नाम तृतीय सर्गः ॥३॥

## चतुर्थः सर्गः

अज्ञानध्वांतं हंतार विश्वलोकप्रबोधकम् ।
चन्द्रप्रभमहं स्तोष्ये[1] मनःशुद्ध्यै वृषाकरम् ।।१।।

अथोत्थाय मृशय्यायाः कृत्वा सामायिकादिकम् ।
स्नानागार समासाद्य स्नानं हि कृतवानहम् ।।२।।

ततो नेपथ्ये गेहस्थस्यानीतं भूषणं मम ।
तांत्रिकैस्तद्धि दृष्ट्वेदं चितितं मानसे मया ।।३।।

कातारतिविलोभार्थं भूषण गृह्यते नृभि. ।
क्षपायां लक्षित सोऽद्य ततोऽलं भूषणेन मे ।।४।।

सभ्यो जनोऽथ वा ब्रूयात्तदग्रहणकारणम् ।
[2]दक्षो दुष्टाशु तच्छ्रुत्वा सा पापाचारजाद्भयात् ।।५।।

स्वय म्रियेत वा मा हि मारयेतातिरौद्रधो ।
अतो विरक्तभावेन स्वीकृतं भूषण मया ।।६।।

ततो गत्वा सभा रम्यां ध्वजमालाद्यलंकृताम् ।
हैमे सिंहासने तत्रोपविष्टोऽहं [विरागवान्][3] ।।७।।

भूपसामतमन्त्र्याद्यं कृताजलिपुटैस्तदा ।
लब्धस्वावसरै मूर्ध्ना कृता मेऽह्यब्जवदना ।।८।।

अथैतेषु निविष्टेषु यथास्थान शुभाप्तये ।
श्रीजिनेन्द्रमुखोत्पन्नशास्त्रस्याज्ञाननाशिन ।।९।।

[जिनेन[4]] पाठकं नाशु [शुभाश्रवनिबन्धनम्[5]] ।
मनोहरगिरारब्ध व्याख्यान स्वाद्यवारणम् ।।१०।।

---

१. वन्दे ।
२. क. दक्षी ।
३. क ख. ग घ. विरक्तवान् ।
४. क ख. जैनेन ।
५. क. ख. सातास्रवनिबन्धनम्

आगता जननी मेऽ न्नातरे पि सपरिच्छदा ।
मुदाकृतप्रणामाय सादादाशिषमूर्जिताम् ॥११॥
तथा वेत्रासनासीना[सा] प्राक्षोन्मामनामयम् ।
मया चित्ते विचार्येद वाक्य प्रोक्त तपोऽर्थिना ॥१२॥
शिवं किन्त्वद्य [दुःस्वप्नो दृष्टोऽम्ब][1] रात्रौ मयाऽशुभः ।
जटाजूटशिरोदीर्घशरीरोऽति भयानकः ॥१३॥
विकरालमुखो रौद्रो राक्षसो वक्ति मामिति ।
सुताय सकल राज्यं दत्त्वाशु त्वं मुनिर्भव ॥१४॥
एवं कृतेऽत्र कौशल्यं भवतां स्याद् वतान्यथा ।
शीघ्रं राज्यान्वितं त्वां सकुटुबं भक्ष्ययाम्यहम् ॥१५॥
अतो मातर्ग्रहीष्यामि सर्वनाशभयातुरः ।
सूनौ राज्य समारोप्य सयम देव-दुर्लभम् ॥१६॥
श्रुत्वा स्वप्नमसाधु त भयवेपितया तया ।
प्रोक्त पुत्र धरां पाहि चिर विघ्नातिगोऽखिलाम् ॥१७॥
तत्स्वप्नमाननार्थं स्वराज्यपट्टोऽपि बध्यताम् ।
यशोमति-सुतस्याशु स्वहस्तेन त्वयाऽधुना ॥१८॥
कि च कात्यायिनी देवी ममास्ति कुलदेवता ।
स्निग्धा विघ्नोपसर्गाऽशर्म्मदुःस्वप्नादिनाशिनी ॥१९॥
तस्याः स्वयं हृतैर्जीवयुग्मै स्थलजलादिजै ।
दुःस्वप्नशांतये वत्स भक्तया त्वं कुरु पूजनम् ॥२०॥
अथ हिंसाकरं वाक्य श्रुत्वा मात्रोदित मया ।
स्वकर्णयुगलं छन्न स्वपाणिभ्यां तदा कृतम् ॥२१॥
ततः प्रोक्ता मया मातेति त्वयाव निरूपितम् ।
मिथ्यावाक्यं बुधैर्निन्द्य सत्वघ्न धर्मदूषकम् ॥२२॥

---

१. क. ख. ग. घ. स्वप्नोदर्श्यंब—मात्रादोष अभिव्यक्तिदोषश्च ।

विघ्नजालं महादुःखरोगक्लेशप्रदंबकम् ।
निद्य घोरतरं पापश्वभ्रतिर्यग्गतिप्रदम् ॥२३॥

राज्यलक्ष्मीकुटुंबादिध्वंस [श्चेज्]जायते नृणाम ।
भयभीतांगिघातेन शठानामिह निश्चितम् ॥२४॥

अंधत्वं कुब्जकत्व च दुष्कुलत्व कुजन्मताम् ।
दौर्भाग्यत्वं विभीरुत्व निःस्वामित्वं दरिद्रताम् ॥२५॥

दीनत्व निर्धनत्वं च वामनत्व कुरूपताम् ।
भोगापभोगहीनत्व दासत्व बहुशोकताम् ॥२६॥

नारकत्व कुतिर्यक्त्व कुष्ठादिव्याधिसचयम् ।
सर्वानिष्टादिसयोगं वियोग चेष्टवस्तुनः ॥२७॥

निर्दया हिंसका नून प्राणिनश्च भवे भवे ।
लभन्ते बहुधाऽशर्म प्राणिघातार्जिजताशुभात् ॥२८॥

यत्किंचित्ससृतौ दु.ख-रोग-क्लेशादिज घनम् ।
तत्सर्व हृ.यब जानिहि सर्वघातफल नृणाम् ॥२९॥

किंच धर्मो जिनैः प्रोक्तो विश्वसत्वाभयप्रदः ।
अहिंसा लक्षणोपेतः सर्वविघ्नातको भुवि ॥३०॥

अतो दु ख-प्रशान्त्यर्थं मात कार्यः शुभोदय ।
समस्तप्राणिवर्गेषु दक्षैरत्र हितंकरा ॥३१॥

दया पूर्वोऽप्यनुष्ठेयो धर्मोऽनिष्टविघातकृत् ।
विघ्नहान्ये स्वसौख्याय चेहामुत्र हितप्रद. ॥३२॥
न हृतव्याः क्वचिज्जीवा भयभीता विवेकिभिः ।
प्राणांते पि दया त्यक्त्वा विघ्नघ्ना विघ्न शान्तये ॥३२॥

---

1. क. ख. ग. घ. च
2. क. ख प्रतिलिप्ययोः 25-25 श्लोकयो. क्रमव्यस्तयो विद्यते ।
3. क. ख. घ. मातः कार्या दया शुभा

तथानिष्टविनाशाय पूजनं श्रीजिनेशिनाम् ।
विश्वविघ्नहरं मातर्महाभ्युदयसाधनम् ।।३४।।
नीरादिफलपर्यंतैरष्टभेदैर्बुधोत्तमैः ।
पूजाद्रव्यैश्च कार्यं भक्त्या शक्त्या गृहनायकैः ।।३५।।
नात्र दुष्टा हिंसा देवी पूजनीया सुधार्मिकैः ।
या हंति देहिनां पापिनो क्रूरा विघ्नहानये ।।३६।।
तथात्र क्षत्रियो धर्म. प्रणीतो नोतिवेदिभिः ।
दुष्टनिग्रहजः सुष्ठु प्रतिपालनसंभवः ।।३७।।
अतोऽन्यायाध्वगा भूपा नहि संति कदाचन ।
निर्दोषाश्च पशून्दीनान् दतधृततृणांस्त्रिधा ।।३८।।
नृपा यदि पशून् घ्नंति ततो लोको निरंकुशः ।
हंत्येतानखिलो ज्ञात्वेति हिंस्यास्ते न भूमिपैः ।।३९।।
अतो राजसुतैर्यत्नः कर्तव्योऽत्र महान् सदा ।
सर्वांगिरक्षणे न्यायरतैर्धर्माय शर्मणे ।।४०।।
तथा नृपो[1] बला घातं दुर्बलस्य करोत्यधी ।
स परत्राप्यवाप्नोति तस्मात् घातमनेकशः ।।४१।।
दुःखं वा यदि वा सौख्यं यो यस्यात्र ददाति सः ।
वैरात् स्नेहादमुत्रापि तस्मात्तद्वर्तयेन्महत् ।।४२।।
[यथैवाऽहं][2] च विज्ञाय धर्मपाप हिताहितम् ।
जिनेन्द्रवचनं जातु न करोम्यंगिघातनम् ।।४३।।
दीपहस्तेन किं साध्यं कूपे स्यात्पतनं यदि ।
तथा ज्ञानेन पुंसा च प्राणिरक्षा भवेन्न चेत् ।।४४।।
इति विज्ञापिता माता मया मामवदत्पुनः ।
पुत्रपौत्रस्नुषात्यंतमोहाद्यतमसाधधीः ।।४५।।

---

1. क. ख. ग. त्रयो ।
2. क. ख. ग. घ अतोऽवाहं ।

नैष्कर्मसूचकं धर्मं पुत्र जानासि केवलम् ।
अहिंसालक्षणं शास्त्रं जिनोक्तं च दयावहम् ॥४६॥
वेदमार्गं न जानासि यागादिकरण वृषम् ।
शातिवृद्धिकरं हिंसासभव मनुनोदितम् ॥४७॥
जीवघातार्च्चने नैव कुर्युर्देवाः [सुतोषिताः][1] ।
शातिपुष्टि श्रियं वृद्धिमारोग्य च नृणां भुवि ॥४८॥
यागार्जिताय पाकेन शक्रत्व राज्यमद्भुतम् ।
आप्नुवति जना नूनममुत्र सुखमेव च ॥४९॥
यत् त्वयोक्त परेषा यत् कृत दु.ख हि तत्पुन ।
आयाति,मरण वा तत् न सत्य त्वमिद श्रृणु ॥५०॥
हता ये पशवो यागे वेदमन्त्रैर्द्विजैर्भुवि ।
देवार्चनाय ते स्वर्गगा मता वेदवदिभि ॥५१॥
औषधार्थं यथा भुक्त विष हृत्यत्र वेदनाम् ।
धर्मार्थं च तथा हिंसाकृतविघ्न नृणामथो ॥५२॥
अतो वेदे च यागेऽत्र कृत्वा त्व निश्चय कुरु ।
धर्मबुध्यांगिना हिसा निःशकीभूय हे सुत ॥५३॥
एव तद्वचन श्रुत्वा भणितांबा मया पुन ।
मिथ्यादृष्ट्यातिमोहाधा राजन्नति तदा स्वयम् ॥५४॥
सर्वज्ञ सर्वदर्शी यो विश्वनाथो जगद्धित ।
कृत्स्नदोषातिगोऽनतगुणाब्धि श्रीजिनेश्वरः ॥५५॥
[प्रणोत][2] स्तेन यो धर्म सर्वजीवहितकर ।
हिंसातिगो भवेत्सत्यो नान्यो धूर्तै प्ररूपित ॥५६॥
प्रामाण्यात्पुरुषाल्लोके वाक्यप्रामाण्यमिष्यते ।
तयोर्ये विषयासक्तास्ते न सत्पुरुषा भुवि ॥५७॥

---

१. क ख ग घ सुप्रीणिता ।

२. क ख ग. घ. प्रीणितः ।

हिंसाया यदि धर्मोऽत्र जायते ते मति भुवि ।
ततो मातश्च दुष्टाश्चाखेटिका नीचजातिजाः ।।५८।।
सर्वे कार्वादयो व्याधाः धार्मिकाः सत्त्वहिंसनात् ।
स्युर्न चान्ये दयोपेताः मुनयः सत्कुला नृप ।।५९।।
यदि स्वर्गो भवेत्सत्वहंतॄणां निर्दयात्मनाम् ।
तर्हि श्वभ्रं भवेत्केषा मातस्त्वं मे निरूपय ।।६०।।
येन प्राणवतां घातो जायतेऽत्र कदाचन ।
न वेदः प्रोच्यते सद्भिः स पापश्छेदकारणः ।।६१।।
वेदनाम्नाऽत्र सिद्धान्तं प्रोक्तं श्रीतीर्थदेशिना ।
समस्तांगिहितं मान्यं सर्वजीवाभयप्रदम् ।।६२।।
तेन जैनोक्तवेदेन यः प्रोक्तो धर्म एव सः ।
स्वर्गापवर्गयोर्मूलं दयाढ्यः स्यान्न चापरः ।।६३।।
अहिंसालक्षणाद्वेदाद्धर्माच्चोज्जायते नृणाम् ।
शांतिर्वृद्धिर्महद्राज्यं पुष्टिः तुष्टिर्न हिंसनात् ।।६४।।
भवेद्घातोऽगिनां येन स यागो न बुधैः स्मृतः ।
यतोऽगिवधनेनेहामुत्र दुःखं तथाऽशुभम् ।।६५।।
जिनानां यजनोद्भूतो यो यज्ञ. प्रोच्यते बुधैः ।
विश्वविघ्नहरो नाककारणोऽत्र कृपामयः ।।६६।।
कर्तव्योऽत्र गृहस्थैः स महाभ्युदयकारकः ।
सदाय स्वर्गमोक्षाय नापरो जीवहिंसकः ।।६७।।
ये प्राणिघातनोद्युक्ताः क्रूरा मूढैः प्रकल्पिताः ।
देवास्ते न भवंत्यत्र देवा दुर्गतिगामिनः ।।६८।।
निग्रहानुग्रहं कर्तुं न ते पुंसां क्षमा भुवि ।
निर्गुणा रागिणो निंद्या दक्षैः शस्त्रकराः खलाः ।।६९।।
निरायुधा हि निर्भूषा जिनेशा दोषदूरगाः ।
भुक्तिमुक्तिप्रदाः पूज्या महादेवा बुधैर्मताः ।।७०।।

यदि यागे हता यान्ति पशवो नाकमेव हि ।
तर्हि स स्वजनैः किं न [मोहान्धैः][1] क्रियते मखः ॥७१॥

जायेताऽत्र क्वचिद्दैवात्सर्पात् स्यादमृत वच ।
गोशृंगादथवा क्षीरं न धर्मः प्राणिहिंसनात् ॥७१॥

यथाग्निः शीतलो नाम्या[2]न्वंचसत्व सुरापसः ।
अभव्याश्चापि भव्यत्वं तथा हिंसा वृषं क्वचित् ॥७३॥

यथाकाशान्महान्नाब्धो मधुर नामृतात्परम् ।
जिनेशान्न परो देवः [नाहिंसायाः परो वृष.][3] ॥७४॥

नातो मातः क्वचित्प्राणात्ययेऽपि हा गिर्हिसनम् ।
करोमि कुलधर्मं मे हत्वा जीवदयामयम् ॥७५॥

यतो जीवदयोपेत पितृधर्म्मं जिनोदितम् ।
त्यक्त्वा, कामे शठाः कुर्युः सत्त्वघातकर वृषम् ॥७६॥

ते लब्धा कुलनाशं च लक्ष्मीध्वंस मृति व्यघम् ।
इहाऽमुत्र पतत्येवातिघोरे नरकेऽशुभात् ॥७७॥

[दयाद्राभवन् माता][4] वत्स मैव निगाकुरु ।
पूर्वाचार्यमत वेद हिंसाधर्मं कुहेतुभि ॥७८॥
यतो वेद-पुराणस्मृत्यादीना खलु भूतले ।
मनुनोक्तवृषादीना विचारो न विधीयते ॥७९॥
वेदधर्मादयोपोति[5] प्रसिद्धा. शिवशासने ।
आज्ञामात्रात्परिग्राह्या न हंतव्याः कुहेतुभि ॥८०॥
ततो मयेति सज्ञान जिनैरत्रापि यो जन ।
न बोध्यो वचसा सोऽन्यै र्मादृशैश्च कथ भुवि ॥८१॥

---

१. क. ख. ग घ. मोहनै· ।

२. क. याति ।

३. क. ख ग घ. तथाऽगिरक्षणाद्वृष. ।

४. क. ख. ग. घ अनुमामवदन् मतां ।

५. क. ख. ग. घ. प्येति ।

ततो वाचंयमी भूय स्थितोऽहं भूपते तदा ।
यदस्या रोचते ऽसौ तत्करोतु जननी मम ॥८२॥

योऽथवा मातृवाक्योल्लंघनोऽधर्म्मः स एव[1] ।
न इत्याधीमये भूयो मातेति गदिता मया ॥८३॥

यद्यगिहिंसनाद्धर्मः प्रोक्तो वेदे कुदृष्टिभि ।
ततो निजं शिरश्छित्वा सकिरीटं सकुंडलम् ॥८४॥

देवतायै ददाम्यम्बत् प्राणिघातं करोमि न ।
मनोवाक्काययोगेन श्वभ्रपाथेयकारणम् ॥८५॥

एवमुक्त्वा सभामध्ये मंक्ष्वाकृष्य स्वपाणिना ।
मया खड्गः कृत. कंठे वरहारादिभूषिते ॥८६॥

निशात त गलेलग्ननालोक्य सहसा मम ।
हाहाकारं विधायोच्चैर्मोचयामास सा स्वयम् ॥८७॥

गृहीत्वा [मम[2]] पादौ मां साऽवदन्मूढमानसा ।
दुःस्वप्नशातयेऽत्यतभयगद्गदभाषिणी ॥८८॥

मा भूयाःनिर्दयो वत्सासुपिष्टकुकवाकुना ।
आत्महस्ताहतेनाऽद्य शान्त्यै देव्यर्च्चन कुरु ॥८९॥

ततो मोहतमश्छन्नहृदयेन मया चिरम् ।
पायोदयाद्धिता पादलग्नां दृष्ट्वेति चिंतितम् ॥९०॥

धर्माधर्मविचारज्ञामानेयं मा किमन्यथा ।
योऽप्यत्यथ वा धर्मो परश्वैव भविष्यति ॥९१॥

तदेवं श्रद्दधानेन पुण्यहीनेन पापिना ।
मूढेनोत्थापिता माता मयोक्ता चैवमस्त्विति ॥९२॥

अहो याऽत्रांगिनां भाविनी गतिर्जायते भुवि ।
सहाय्यबुद्धिधर्माद्यादिसामग्री च तत्प्रदा ॥९३॥

---

1. ख. धर्म एव सः
2. क. ख. ग. नुमत् ।

दत्ता सुलेपकाशाणमाज्ञो तुगं सुकुर्कुटम् ।
देतवार्च्चनयोग्यं [मामानयन्त्वति][1]-सुन्दरम् ॥९४॥
आज्ञानंतरमेवासौ तैरानीतोतिरूपवान् ।
तं मां चांबार्च्चनमादायागात्[2] तस्या मठेऽशुभात् ॥९५॥
तदाग्रतं निधायाय दत्तस्ते देवि कुकुंटः ।
सर्वसत्वार्थमेवाद्य भूयाः शांतिप्रदा मम ॥९६॥
इत्युक्त्वा स स्वहस्तेन हतो मोहांधचेतसा ।
तदाघकर्म मे जात क्वचारात्कुगतिप्रदम् ॥९७॥
ततस्तत्पिशितं मात्रा प्रहित मन्महानसे ।
उक्त्वात्त तद् भक्षयामोद सर्वेराशिषेत्यघशांतये ॥९८॥
ततस्तद्भक्षण वादं कृत्वा मात्रासमं मया ।
प्रतिपन्न पल मूढधिया दुर्गतिकारणम् ॥९९॥
कुमारस्य ततो राज्यपट्टो बद्धो मया स्वयम् ।
सामंतसन्निधौ कृत्स्नकोशादिश्च समर्पित ॥१००॥
अथ दीक्षोद्यत ज्ञात्वा मां राज्ञी कुटिलाशया ।
पतित्वा क्रमयोरेत्याऽवोचदेतदलज्जिता ॥१०१॥
हा प्रियेय कथ प्रोक्त तपोवाक्य त्वयाऽधुना ।
एतच्छ्रुत्वा शुभेऽत्यत शतधा हृदय स्फुटत् ॥१०२॥
त्वद्वियोग क्षमा नाह सोढु क्षणमपि क्वचित् ।
त्वां विनात. कथ नाथ [जीवेय] शोकविह्वला ॥१०३॥
तिष्ठाद्यातो दिने ह्येक तु ग्राह्ययालोकनाय वै ।
त्वया सम गृहीष्यामि दीक्षा त्वद्भक्तिदां ह्यहम् ॥१०४॥
[जन्मजन्मान्तरेऽपि त्व][3] भर्ताभूयान्न मे पर ।
कृत्वेत्यह निदान ,च[4] करिष्यामि महत्तप ॥१०५॥

---

१. क. ख ग. घ. ममानयतातिसुन्दरम् ।
२. क. ख. ग. घ मादाया मातू ।
३. क. ख. ग. घ. जन्मान् जन्मन्येव त्व ।
४. क.ख.ग.घ—स

अथेदं तद्वचः श्रुत्वा मानसे हृषितं मया ।
अहो दुष्टाशया क्रूरा रामा वचनतत्परा ॥१०६॥
चित्रमेतन्मयात्यंतं पापादयैषा गृहीष्यति ।
किं मया मामहादीक्षां त्यक्त्वा तं कुब्जकं प्रियम् ॥१०७॥
न ज्ञायतेऽत्र नारीणां चेष्टितं तास्त्यजंत्यहो ।
जीवंतं पतिमेवमामरणेनानुयांति च ॥१०८॥
संचित्येति तदा राजन्प्रोक्ता सोतिष्ठ सुंदरि ।
किं कदाचिन्मया ब्रूहि कृत ते वाग्विलघनम् ॥१०९॥
साऽथोत्थायावदन्नाथ मयाद्य त्व निमंत्रितः ।
दारैर्मात्रा समं रम्य भोजन कुरु मद्गृहे ॥११०॥
तद्वचो पि मया राजन्नघाच्छादितबुद्धिना ।
तत्कौटिल्य जानतापि[1] मानित प्राणनाशकृत् ॥१११॥
ततो देवार्चन कृत्वा जिनान् स्तुत्वागमत्समम् ।
मात्राद्यैर्भोजनागार भोजनेच्छाविवर्जितः ॥११२॥
कुटुंबेनाप्य मातत्र रमणीयासने शुभात् ।
उपविश्य वराहार भुक्त्वा तृप्तिमगामहम् ॥११३॥
स्वतपो दुश्चर ह्येष आदते वा न वा यत ।
तन्नार्यो बाधवा सति वारकाश्च सहस्रशः ॥११४॥
समर्पिता अनेनाद्य मत्सूनो राज्यजा श्रिय. ।
मक्ष्वेनमबया सार्द्ध ज्ञात मच्चरित विषम् ॥११५॥
मारयामि प्रदत्वानुभोक्ष्ये जारेण स्वेच्छया ।
कामभोगांश्च मत्वेति सा दुष्टा श्वभ्रगामिनी ॥११६॥
मनोहरा गिराऽवादीदेवे मातुरमोदकान् ।
अशनमद्दया कृत्वा गतान्मत्कुलवेश्मनः ॥११७॥

---

1. क. ख. ग. घ. जानतापि तत्कौटिल्यं ।

इत्युक्त्वाशु स्वयं दत्ता देव्या तान्विषमोदकान् ।
सार्द्धमादामहं मात्रा स्वाद्याज्जानन्मनाग्मनाक् ॥११८॥
तद्दोषो तत्क्षणं मेऽभाज्जिह्वाति जडता व्यधात् ।
अंगान्यभूवन् सर्वाणि शिथिलानि शनैः शनैः ॥११९॥
प्रतिग्रहजनानीतेनाचम्याशु विषातुरः ।
समुत्थाय ततोऽन्यस्मिन्नासने न्यवशं शनैः ॥१२०॥
ततो दाहो महान्जातो गात्रे स्वेदलवांचिते ।
भ्रमंतं वा दिशामोघमद्राक्षं कालकूटत ॥१२१॥
ततो विह्वलता प्राप्य पतितो दुर्मंताविव ।
आसनादशनैर्धात्र्या महापापभरादहम् ॥१२२॥
प्रस्खलज्जिह्वया दीनगिराशु शब्दित मया ।
आनयत जना वद्यान्विषघ्नान्मेऽन्तिकं वरान्[1] ॥१२३॥
ज्ञात्वा वैद्यागमं शीघ्रं सा पतित्वा ममोपरि ।
मूर्च्छाछद्मतया कंठं भंक्त्वा बाहुद्वयेन च ॥१२४॥
कोमलं हारयष्ट्याढयं तत्क्षणार्जितपापतः ।
त्याजितोऽहं नृप प्राणानंति निघ्नंयया तया ॥१२५॥
अतोऽतिरोदनं चक्रु देव्यो भृत्याश्च सूनुना[2] ।
शोकांतर्दग्धसर्वांगा सार्द्धं निस्वामिका नृप ॥१२६॥
अमात्यैर्बोधिता देव्य काश्चिद् दीक्षां समादयु ।
काश्चिद्गृहे तपः कुर्युः केचिद्भृत्याश्च बोधिताः ॥१२७॥
मत्पुत्रेणानुमत्तृप्त्यै ब्राह्मणेभ्योऽप्यनेकशः ।
भूगोहेमादिदानानि दत्तानि मूढचेतसा ॥१२८॥
तथाप्यहं नृप प्राप्तो दुर्गतिं दुःखपूरिताम् ।
जैनधर्मात्ययाद् जीवघाताच्चात्रानया समम् ॥१२९॥

---

1. ख. मेऽतिकष्टकाम् ।
2. ख. अतोऽतिरोदनं कुर्युः देव्यो भृत्यश्च सूनुना ।

जिनवृषहननात् मिथ्यात्वजातांगिघाता-
दसुखनिखिलपूर्णां प्राग्मंदं ब्रयामः ।
नृपतिरिति हि मत्वा जैनधर्मं विहाय ।
क्वचिदपि बुधदक्षा मा कुरुध्वं कुधर्म्मम् ॥१२०॥

ये पठंति सकलागममेवं
पाठयंति शिवद वरशिष्यान् ।
ते स्तुता मम दिशंतु गणीशान्,
पाठकाः स्वकृत्यात्मधवांश्च ॥१२१॥

इति श्रीभट्टारक-सकलकीर्ति-विरचितेयशोधरचरित्रे
यशोधर-चन्द्रमती-निपातनो नाम चतुर्थः सर्गः ॥४॥

वैरिचक्रं जितं येन प्राक्चन्द्रेण च शांतिना ।
कर्मचक्रं पुनर्ध्याने चक्रेणेव चिदेऽत्र तम् ॥१॥
अथास्ति विन्ध्यनामा गिरिस्तुंगो [1]भयंकरः ।
मांसाशि पक्षिभिर्व्याघ्रादिभि र्व्याधैश्च हिंसकैः ॥२॥
तत्राभूव मयूरीगर्भेऽहं दुःखनिधानके ।
प्रागर्जिताघपाकेन दीनः सर्वांगपीडितः ॥३॥
चिरं तत्रानुभूयाहं दुःखं घोरतरं ततः ।
कर्माधीनो मयूरः प्राशुचिद्वारेण निर्गतः ॥४॥
अथागत्य कुतश्चित्पापिनावां मारिताशु मे ।
मदंतिके सुखासीना लुब्धकेनेषु घातनः ॥५॥
ततस्तां स्कंधमारोप्याशु स्वांके मां निधाय च ।
सोऽगमत्माक्षिकग्रामेऽयाध्याया निकटे शुभे ॥६॥
तत्र स्वगेहगर्तायां मां निक्षिप्य[2] क्षुधातुरम् ।
तलारस्य गृहं गत्वा दत्वा तां तस्य चागतः ॥७॥
रिक्तायातो यतो धामं शास्तः सोऽघी. स्वभार्यया ।
नास्त्यद्य भक्षणं किंचित् यां हि रंडा सुतामुतः ॥८॥
ततोपि मां गृहीत्वा स गत्वा रक्षकसन्निधिम् ।
स्वल्पमूल्येन तद्धस्ते विक्रीय स्वगृहं ययौ ॥९॥
रक्षितस्तेन यत्नेनाहं ममायं भविष्यति ।
यशोमति-महीभर्तुर्मत्वेति प्राभृतं शुभम् ॥१०॥

---

1. क. ख. ग. घ. अतिभयंकरः—मात्रादोषः ।
2. क. ख. ग. घ. निक्षिप्य माम् ।

क्रमात् कायोऽप्यगाद् वृद्धि मम कीटादिभक्षणात् ।
कमनीयः कलापोऽभूत् रम्यः सर्वमनोहरः ॥११॥
अथासौ एकदादाय मां विशालां पुरीमगात् ।
मत्पुत्रस्य महीपस्य तत्राहं तेन दर्शितः ॥१२॥
सोपि मद्दर्शनात्स्नेहं परं तुष्टितरामगात् ।
कस्यात्र जनकालोके संतोषो नोपजायते ॥१३॥
अथ चन्द्रमति चांबा मारिता विषदानत. ।
तदा सार्द्धं मया देव्या मिथ्यात्वार्जितपापतः ॥१४॥
विकरालमुख. श्वातिभीषणो रौद्रमानस ।
वक्रदंष्ट्रो यमोवासीत्साबलीकरहाटके ॥१५॥
तत्र तेनापि राज्ञा स भूषण. प्रेक्षितोऽन्यदा ।
प्राभृतं मृगयार्यै च यशोमति-महीभृत. ॥१६॥
श्वान राजा तमालोक्य पापहर्षं विधेर्वशात् ।
अहो ससारवैचित्र्य पापात् किं किं न जायते ॥१७॥
तत समर्पयामास चंडमत्यो·[1] श्वनां प्रभोः ।
त श्वान पोषणायैव वृद्धस्यैकस्य मां नृप ॥१८॥
अथैकदा स्वधामाग्रभूमौ दृष्ट्वा निजेच्छया ।
देवी ता कुब्जकोत्संगे स्थिता जातिस्मरोऽभवम् ॥१९॥
तत. प्राग्जन्मवैरेण मया कोप [परेण च][2] ।
मस्तके प्रहतौ तौ हि प्रदुष्टौ नखरै खरैः ॥२०॥
ताभ्यामह हत कोपात्काचोदामादिभूषणैः ।
तद्दासीभिश्च तद्भृत्यैर्यष्टिमुष्टिक्रमादिभिः ॥२१॥
तद्घाताद्विकलो भूत्वा पतितस्तीव्रवेदनः ।
निःशरण्योऽतिदीनात्मा पापपाकान्महीतले ॥२२॥

---

१. चन्द्रमत्योः ।
२. क. ख. ग. घ. कोपपराय· .

मामालोक्य मत्पुत्रेण दीव्यतार्क्षैस्ततोऽशुभात् ।
श्वानं तं प्रत्ययाचीति त्राहि त्राहि शिखीवलम्[1] ।।२३।।

ततो बलाच्छुना तेन कृत्वा श्रृंखलखंडनम् ।
गृहीतोऽहं गले तीक्ष्णं दंष्ट्रयाशर्मपूरित. ।।२४।।

राज्ञा निर्दयचित्तेन सोपि केशायिना हतः ।
श्वाप्रहाराकुलीभूय पपात धरणीतले ।।२५।।

मामर्द्धचर्वितं मुक्त्वा गतासु सहसा तदा ।
इति तेन[2] शठाग्रेण स्वपित्रोर्मरणं कृतम् ।।२६।।

तथावां पतितौ दृष्ट्वा महीप शोकतत्पर ।
रोदनं विदधे मूढमानसः पर्वैवच्चिरम् ।।२७।।

ततोऽवादीन्महीश पुरोहितादीन् प्रति स्वयम् ।
पितराविव संस्कार्यतामिमौ शिखिमंडलौ ।।२८।।

एतयो सर्गसंसिद्ध्यै प्रापयध्वं सुरापगाम् ।
अस्थीनि गोसुवर्णादि ब्राह्मणेभ्य प्रदीयताम् ।।२९।।

विहितो ह्येष संस्कारः सर्वस्तैर्मत्सुखाप्तये ।
तथापि न मया किंचित्प्राप्तं प्राप्ता च दुर्गतिः ।।३०।।

मृतस्वजनतृप्त्यर्थं कुर्युर्दानानि ये शठाः ।
ते वृथा देवसंतृप्त्यै यजंते भस्मसंचयम् ।।३१।।

अहो कर्मगुरुत्वं मेऽचेतनं पक्षिघातजम् ।
एवं चिंतयतः कृच्छ्रात्प्राणैर्मुक्तं वपुर्मम ।।३२।।

सुवलाख्य-नदीतीरे अथ भीमाभिधं वनम् ।
व्याघ्रादिरौद्रसत्वैश्च भीषणं तीक्ष्णकंटकैः ।।३३।।

तत्राहं जनितो जाहया[3] जाहकेनाशुभोदयात् ।
अपूर्णसमयेऽतीव कष्टेनात्यंतदुःखभाक् ।।३४।।

---

1. मयूर इत्यर्थः ।
2. सेहल्या इत्यर्थः ।
3. यशोमतिना इत्यर्थः ।

मत्प्राक् पापोदयान्माता वृकवृकुबाऽभवत् ।
तरां संतापितोऽतोऽहं हृदुत्पन्नक्षुधाग्निना ॥३५॥
ततोऽहीनहमुद्यन्नोन्विष्यान्विष्यात्तुमादरात् ।
तेनाहि भक्षिणो तथा वृद्धि कायोऽपि मे दृढः ॥३६॥
अथ श्वा यो हतो राज्ञा प्राक् सोऽभूद्भीषणे वने ।
कृष्णसर्पोऽति रौद्रात्मा तत्र मिथ्याशुभोदयात् ॥३७॥
सोऽन्यदा च मया दृष्टश्चरता सचरन्वने ।
गृहीतोऽनुदृढः पुच्छे कठेऽहं पूर्ववच्छुना ॥३८॥
[1]खादमानस्ततोऽत्तु मा क्रुद्धा वाछति पीडितः ।
न पुनः खादितु शक्तः कटकाचितविग्रहम् ॥३९॥
अत्रांतरे समागत्य तरक्षोऽपि कुतश्चन ।
परिवृत्यावपाकान्मामदंभुक्तभुजगम् ॥४०॥
त्रोटयित्वा सिराजालमुत्पाद्य चर्म्म पापधीः ।
अस्थि सचूर्णन कृत्वाति निस्त्रिंशश्चखाद वै ॥४१॥
कुर्वन्नप्यति फूत्कारं तीव्रवेदनाय तथा ।
कृच्छ्रामृतोऽतिदुःखार्तोऽहं प्राक्कर्मवशीकृत. ॥४२॥
अथ सिप्रा नदी रम्या विशालाबलसज्जला ।
विशालशाललग्नास्ति सपद्मासिकतान्विता ॥४३॥
रोहिताख्योऽभव मत्स्यस्तत्राहं पापकृन्महान् ।
शफरीगर्भसजातः प्रसूतोऽमृतमातृकः ॥४४॥
वने मुक्त्वाति कष्टेन प्राणान् सर्पोपि पाकतः ।
नद्या तत्राभवद् दुःखी शिशुमारोऽतिदारुण· ॥४५॥
अथान्यदाप्यहं तेन गृहीतो मीनकाङ्क्षिणा ।
वैरादधृदातराद्येत्य स्वपुच्छे प्राग्मयैव सः ॥४६॥

---

१. सर्प इत्यर्थः ।

स्नातुमत्रांतरे प्राप्ताः कुब्जकादिजनोत्कराः ।
तत्रैका कुब्जिकाऽपप्तत्सहसाहारमूर्द्धनि[1] ।।४७।।
[2]सोनु मामपहायाशु ग्राहस्तामग्रहीद्दृढम् ।
साप्यराटीत्तथा सर्वा यथाऽगुः समयास्तटम् ।।४८।।
तदा दीनवचः श्रुत्वा चेटिकाकथितं नृपः ।
जगाद्संसदो मध्ये कोपादुच्चैरिद तदा ।।४९।।
कुर्वे निरपराधाना मृगादीनामहं वधम् ।
सापराध कथं दुष्ट प्रमुंचाम्यत्र वाचिरम् ।।५०।।
इत्युक्त्वाशु समुत्थाय स क्रूरस्तं ह्रदं व्यगात् ।
पलाय्य भयभीतोहं प्राविशं विवरं भुव· ।।५१।।
ततो राज्ञा समाज्ञातो हृष्टो धीवरघाटक· ।
प्रविवेश ह्रद दूरान्निर्दयोऽत्यर्थमाहृत· ।।५२।।
प्रक्षोभित ह्रद सर्व श्रमं वीत्वा शुभान्सिकान् ।
जालेन भ्रमणेनाति क्रूरैस्तैर्विगतकृपैः ।।५३।।
यथा सो ऽतिभयत्रस्तो जाले जलचरो महान् ।
पपाताशुभपाकेन दीर्घकायो भयंकरः ।।५४।।
शीघ्र ततः समुद्धृत्य सर्वैर्निन्ये तट हठात् ।
प्रयत्नेन स पापोऽसौ धीवरैः पापबुद्धिभिः ।।५५।।
भीतिप्रदस्तटस्थोपि हिंसितो दृषदादिभिः ।
यष्ट्यादिकप्रहारै. सक्रुधी राजाज्ञया खलैः ।।५६।।
अथास्त्युज्जयिनीपार्श्वे पापाढ्यः पाणवाटकः[3] ।
कृत्स्नामनोज्ञताधारश्चर्मास्थ्यादिसमाकुल. ।।५७।।
हारो मृत्वा स कष्टेन तत्राऽजाभूत्कुकर्मणा ।
वर्द्धते सा क्षुधाक्राता प्रत्यह मातृवर्जिता ।।५८।।

---

शिशुमारज्ञमस्तके ।
शिशुमार. ।
कसाइवाडी ।

गतेषु तेषु सर्वेषु निःसृत्य विवराबहम् ।
कियत्कालं स्थितस्तस्मिन् जीवाहारी बिभीत्हृदे ॥५६॥
कदाचिन्मांसिकैरेत्य तं हृदं मत्स्यकांक्षिभिः ।
भ्रात्वा जालं तथा मुक्तं यथा याति ममोपरि ॥६०॥
मत्स्यं जालागतं ज्ञात्वा स्वांतस्तुष्ट्वा प्रविश्य तैः ।
उद्धृत्य स्वकरैर्नीतो बद्धागोहं जलात् स्थलम् ॥६१॥
दृषत्यादादिघातैस्ते प्रवृत्ता मां प्रहिंसितुम् ।
मा कुरुध्व मृति ह्यस्य तद्वृद्धेनेति जल्पितम् ॥६२॥
श्रुत्वा तद्वचनं ध्यानं मयेत्येष दयार्द्रधीः ।
कारयिष्यति मे मोक्ष जलबद्धस्य दुःखिन. ॥६३॥
पुन· प्रोक्तं वचस्तेन रोहिताख्यो झषोऽप्ययम् ।
भोज्यश्च स्यान्नवो राज्ञो हृतोऽद्य क्लिन्नतां व्रजेत् ॥६४॥
आरोप्याऽह तत खट्वा नीत्वा तैर्निजपाटकम्[1] ।
तृणगेहस्थदेशैककचारे निर्दयैर्धृत ॥६५॥
जलजेन मया घारा स्थलजा सातसततिः ।
सोढा तीव्रतरा क्षुत्तृद्दशशीतातपादिजा ॥६६॥
दु·खेन महता मेऽगात्कथचिद्रजनीक्षयम् ।
ततोऽह् दर्शितः प्रातर्मत्मूनोस्तैर्धनेच्छया ॥६७॥
सोऽप्यादायातिमूढात्मा मा ययौ मातुरतिकम् ।
तस्या अग्रे निधायेत्थ वक्तु नम्रः प्रचक्रमे ॥६८॥
अम्ब रोहितमत्स्योय पितृणा प्रोणमे क्षम ।
श्राद्धाद्यश्च स्मृतौ वेदे इत्युक्तं वेदवेदिभिः ॥६९॥
अतोऽप्यस्यामिषेण त्व कुरु श्राद्ध च येन मे ।
पिता चन्द्रमति स्वर्गे भुक्ते सौख्य [मनोरथम्] ॥७०॥
धृत्वातो मस्तके पाद छित्वा पुच्छ तयामिषम् ।
नीत्वा महानसे चाज्यैतलित सर्वतो मम ॥७१॥

---

1. क – पत्तनम् ।

भार्ययेदं पलं मुक्तं सार्द्धं पुत्रस्नुषाजनैः ।
इत्यादि विविधं दुःखमनुभूय चिरान्मृतः ॥७२॥
अथ ह्यारचरी पूर्वमजाया कथिता नृप ।
तस्या गर्भेऽवतीर्णोऽहं मरभो[1] दुरितोदयात् ॥७३॥
प्राप्य जन्मातिकष्टेन बाल्येऽशर्मसुधादिजम् ।
शीतोष्णादिभवं चैव यौवन लब्धवानहम् ॥७४॥
एकदा मूढधीः कुर्वन्कामसेवां सहाम्बया ।
स्वासक्तमनसा दृष्टो यूथनाथ महाविना ॥७५॥
कोपादह तथा तेन कुक्षौ शृंगेण दारितः ।
यथा जोवः सशुक्रो मे सक्रांतस्तदजोदरे ॥७६॥
म्रियमाणेन दुःखेन मयेत्थं पापिनात्मना ।
आत्मात्र जनितो राजन्स्वशुक्रेणात्ममातरि ॥७७॥
ततोन्यदा स यूथेशो दृष्टो मत्सूनु भूभुजा ।
तयाऽबयाऽजया साकं प्राप्तप्रसवकालया ॥७८॥
मृगयालाभरुष्टेन तया सार्द्धं शरेण सः ।
विद्धो महीभृता पापादभूव विगतासुकः ॥७९॥
प्राप्यतो विद्धलक्षौ च पितरौ मे ददर्श माम् ।
चलत मातृगर्भस्थ हिंसानदान्वितोपि सः ॥८०॥
विपाट्य जठर तस्या राज्ञा निस्सारितः शनैः ।
चन्द्रमत्याख्यया छागः सुदशोऽहं समर्पितः ॥८१॥
अजा गोपाल कास्येशानु संस्काराय जावितः ।
अन्यमातृपयःपानैः प्राप्तोऽह यौवनं क्रमात् ॥८२॥
अथैकदातिरौद्रेय यशोमति महीभुजा ।
उक्ता कात्यायनी देवी नत्वेदं पापकारणम् ॥८३॥

---

१. मरभो—यशोधरश्छागरूपेण जात. ।

यदि स्यात् सफलो मेऽद्य मृगया देवि ते परान् ।
विंशति महिषान् दास्ये भक्त्यागत्य प्रियंकरान् ।।८४।।
तेनानुसिद्धयात्रेण कालतालस्य योगतः ।
हताः सुमहिषा हर्षान्निर्दयेन तदंगणे ।।८५।।
सर्वं तदामिषं नीतं राजपुसां महानसे ।
राज्ञो मातुर्द्विजातीना परेषां भोजनाय च ।।८६।।
शठेन सूपकारेणैतस्मिन्नवसरे नृपः ।
विज्ञापितोति नम्रेण पलशुद्ध्यर्थमेव हि ।।८७।।
स्वामि यत्किंचिदुच्छिष्ट काकमार्जारमडलैः ।
आघ्रातं तदजेनाशु शुद्धं स्यादिति वाग्मनो ।।८८।।
ततोऽवादीत्स मूढात्मा महाजं तं समानय ।
तेनानीयास्मि बद्धोहं कर्मणा तन्महानसे ।।८९।।
पिपासायासित[1]स्तत्र क्षुधाक्रांतोऽतिदुःखभाक् ।
आस्ते यावदहं तावन्मेऽभूज्जातिस्मरस्तदा ।।९०।।
मत्सुखार्थं मत्पुत्रेण महारैः पक्तयः परम् ।
भोजिता मधुमासाद्यैर्भक्त्या वेदविदा मुदा ।।९१।।
स्वर्णगोभूमिदानानि दत्तानि मे पिता समम् ।
प्राप्नोतु चन्द्रमत्येति भणित्वादि वितत्फलम् ।।९२।।
मे तत्रावस्थितस्यापि किंचिन्नायाति केवलम् ।
वर्धते क्षुत्पिपासा च दुःखं मानस-कायजम् ।।९३।।
यथांभोमथनात्सर्पिरहिवक्त्रात्सुधा क्वचित् ।
धर्मांगिहननात्कीर्तिः क्वाचारःराज्जायते न च ।।९४।।
तथा पुत्र प्रदानेन पितृणां तृप्तिरेव न ।
अतः श्रद्धादिकं दानं पुसां स्यात्तुषकंडनम् ।।९५।।

---

१. पिपासापीडितः इत्यर्थः ।

भुक्त्वा गतेषु सर्वेषु भुंजानं सपरिच्छदम् ।
दृष्ट्वा यशोमतीं दारैर्मे चित्ते यमभूत्तदा ॥९६॥
दृश्यतेऽतः पुरं सर्वं न पुनर्दृश्यते प्रिया ।
अमृतादिमहादेवी क्व गता मेऽसुनाशिनी ॥९७॥
अथेद प्रावदत् काचिद्दासो दास्या समं हृतो ।
हृतानां महिषाणामद्यैव गधोऽतिदुस्सहः ॥९८॥
अन्याऽवोचदिदं नाथ गधो महिषकायजः ।
कुष्टपीडितदेव्या हि किंतु मीनाशनात्तनोः ॥९९॥
अतोऽथाह परानेयं मीनभक्षणदोषतः ।
जाताति कुष्टिनी किंतु विष दत्त्वानया बलात् ॥१००॥
स्वभर्त्ता मारितस्तेन पापेनेय विनिंदिता ।
दुर्गंधा कुष्टिनी जाता दुःशीला श्वभ्रगामिनी ॥१०१॥
चेटीवाक्य समाकर्ण्य ज्ञात्वा सा पुत्रसन्निधौ ।
उपविष्टा मयात्यंतबीभत्सा मत्प्रियाऽशुभा ॥१०२॥
शीर्णांगुलिनखा पादस्फुटिता ह्रस्वनासिका ।
प्रविष्टनयनातीवनिंद्यकाया कुरूपिणी ॥१०३॥
ततो मयेति सध्यात यदात्मास्याः शुभो भुवि ।
स्याच्छुभश्च तदा काय स्वातीव दुष्टचेष्टया ॥१०४॥
यदाऽभूत्स पुनर्दुष्टस्तदा तेन सम वपुः ।
बभूवाऽशुभयोगेन दुर्गंध च घृणास्पदम् ॥१०५॥
अहो पाप न कर्तव्य प्राणान्ते पि क्वचिद्बुधैः ।
कृत्स्नानिष्टाकरीभूत मे चिंतेति तदाऽभवत् ॥१०६॥
सूपकारस्ततो देव्या प्रार्थितः छागलामिषम् ।
भूपोऽपि त प्रति प्राह छागं कृत्वा भडित्रकम् ॥१०७॥
आनयेम हि मद्राशु ह्यनेन मदवह्निना ।
तेनापि मम पादैक सछिद्य विहितक्रियम् ॥१०८॥

निहितं मत्सुतस्याग्रे भूपोऽप्येवमुवाच सः ।
स्वल्पं दत्त्वा द्विजस्यास्य स्वर्गस्थपितृतृप्तये ॥१०९॥
मातुः शेषं प्रयच्छेदं सोप्यशेषं तथाऽकरोत् ।
अहो मूर्खजनानां पापाढ्या चेष्टा भुवीदृशी ॥११०॥
अथाजा या हृता सार्द्धं प्रागनेन मत्सूनुना ।
सोऽभवन्महिषः स्वाघात्कलिंगविषये महान् ॥१११॥
बहुवस्तुभृतां गुर्वीं वरवस्तवणिक्पतेः ।
गोणिकां स पुरीं प्राप विशालां[1] किल्बिषोदयात् ॥११२॥
अपनीतभरस्तीव्रतापदाहार्तपीडितः ।
सिप्रा-नद्यां स मग्नोऽस्थात्सुखेन शीतयोगतः ॥११३॥
तां निम्नगाजलं पातुं संप्रापू राजघोटकाः ।
तेषु धुर्यो विषण्णेन तेनाश्वो दारितो हठात् ॥११४॥
तद्घातान्निपपाताश्वोऽभूद्भूरमो सहसा व्यसुः ।
लब्धवार्तो नृपस्तस्मिंश्चुक्रुधे तस्य पालकात् ॥११५॥
अगादानु समासन्नं सूपकारं प्रति क्रुधा ।
भडित्रकं विधायाशु महिषं तं ममानय ॥११६॥
स गृहीत्वा तमानीय लोहकीलचतुष्टये ।
चतुष्पादेषु बद्धाशु निगडैर्निर्दयो दृढम् ॥११७॥
धृत्वाग्रेऽस्य कटाहं च हिंग्वादि[जल][2] संभृतम् ।
ज्वलदुदरमानेन पपाच खदिराग्निना ॥११८॥
तत्पानीयं पपौ स घात्पावकेन करालितः ।
निस्साराखिलस्तेन जाठरो मलसंचयः ॥११९॥
क्रंदनं कर्षणं प्रायः कुर्वन्प्रतकारमायतम् ।
पतनोत्पतनं कोणः पूर्वपापेन पच्यते ॥१२०॥

---

१. क. ख. ग. घ. गोणिकां स विशालां पुरीं प्राप·······।
२. क. ख. ग. घ. नीर ।

अथाज्ञा निर्गता राज्ञः पक्वं पक्वं तदामिषम् ।
छित्वा छित्वास्य दुष्टस्यानीयतां भोजनाय मे ।।१२१।।
ततोऽसौ पच्यते यत्र प्रदेशे तत्र कृत्यते ।
क्रियते सूपकारेण भुज्यते तन्नृपादिभिः ।।१२२।।
पश्यतस्तदवस्थां मे भयत्रस्तस्य तद्वधात् ।
शारीरं मानस दुःखं जातं तीव्रतरं तदा ।।१२३।।
स्मरतोऽद्यापि तद्दुःख पश्यांग मे प्रवेपते ।
पवनाहतपत्र वा दुस्सहं त्व महीपते ।।१२४।।
यावदेवं त्रिपादेन तिष्ठाम्यसरणोऽसुखी ।
राज्ञा प्रोक्तमिमं छाग कृत्वानय भडित्रकम् ।।१२५।।
समुद्धृत्य ततस्तेन क्षिप्तोहं पापिनाऽनले ।
परं रावं प्रकुर्वाणो भजन्स्यंदादिकं मुहु. ।।१२६।।
छिद्यते भिद्यतेऽगं मे सिच्यते लवणाम्बुना ।
दह्यते पावके दीप्तेऽशुभात् तस्य च तज्जनैः ।।१२७।।
एव प्रागर्जिताश्रेयः पाकेनाहं मृतश्चिरम् ।
दुःखं तीव्रतर भुक्त्वा वह्निकायाशयोद्भवम् ।।१२८।।

एव दुःखमनारतं च विविध धर्मात्यार्द्धिसनात्,
सत्वानां प्रभवेद्विमूढमनसां घोर चिरं दुर्गतौ ।
मत्वेत्यत्र जना जिनेश्वर वृषं मा भो त्यजंतु क्वचित्,
प्राणान्तेप्यशुभार्णवांगिवधनं मुक्तं कुरुध्वं च मा ।।१२९।।

ये साधयति चरण सुखरत्नवार्द्धि
दृग्ज्ञानशुद्धमनिशं विविधं च योगम् ।
आतापनादिजमपीह दिसतु ते मे
श्री साधवोऽत्र नमिताः स्वगुणान् गरिष्टान् ।।१३०।।

इति श्रीभट्टारकसकलकीर्तिविरचिते यशोधरचरित्रे
चन्द्रमती-पचम-भव-वर्णनो नाम
पंचम. सर्ग. ।।५।।

## षष्ठः सर्गः

महाव्रतधरं धीरं वंदेहं मुनिसुव्रतम् ।
विश्वव्रतप्रदं देवदेवं सद्व्रतहेतवे ॥१॥

अथ तत्रैव पाणानां पाटकेऽशुचिसंकुले ।
आवां हि कुक्कुटौ जातौ कुक्कुटीजठरेऽशुभात् ॥२॥

एकदा सावयोर्माता प्रसूतसमयोन्मुखी ।
पापिना वृषदंशेन प्राशिताऽशुभकर्मणा ॥३॥

पतितं जठरात्तस्या आवयोर्दैवयोगत ।
कथंचिदंडकद्वंद्वं कचारस्थपुटावनौ ॥४॥

मासैके तत्र शीतोष्णवाताद्यैश्च प्रपीडितौ ।
क्षुत्तृषाभिः स्थितावावां दीनावंवातिगौ नृप ॥५॥

अथास्मन्मस्तके काचित्कचारं श्वपचांगना ।
आनीयाक्षिपदावाभ्यां तद्घातात्द्रटित भयात् ॥६॥

श्रुत्वा शब्दं च विक्षिप्य तं कचारं क्रमेण सा ।
दृष्ट्वा वां सुन्दरौ नीत्वा जगाम निजमंदिरम् ॥७॥

कीटाःसनादिससक्तौ तत्र दृष्टावथान्यदा ।
आवामागच्छता चंडकर्मणा रूपिणौ वनात् ॥८॥

मत्वा राज्ञो ध्रुवं योग्यौ क्रीडार्थं चारुलक्षणौ ।
तेनावा दर्शितौ रम्यौ स्वय नीत्वा यशोमतेः ॥९॥

सोऽप्याप नितरा प्रीतिमस्मद्दर्शनमात्रत. ।
पितृणां दर्शनं किं नो नृणां तोषाय जायते ॥१०॥

पोषणार्थं स्वयं राज्ञा तस्यैवावां समर्पितौ ।
तेनावयोर्युग नीत्वा पंजरस्थ कृत गृहे ॥११॥

तत्रावयो रजन्येका सुखेनैव गतः क्वचित् ।
शीतवातादिसंत्राणान्नीरपानात्कणादनात् ॥१२॥

अथांतरे ययौ सार्द्धमंतःपुरजनादिभिः ।
रंतुं यशोमतिर्भूपः फलाढ्यं सुन्दरं वनम् ॥१३॥
नृपं वनगत ज्ञात्वा सोऽस्मत्पुण्यप्रपेरितः ।
चंडकर्म्माप्यगादस्मत्पंजरेण समं वनम् ॥१४॥
तत्र [चेतोहरोद्याने ][1] राजसौध ददर्श सः ।
तुंगं सप्ततलं रम्य शिरोरत्नप्रभान्वितम् ॥१५॥
तथासन्नं सित दूष्यमद्राक्षीत्तलरक्षकः ।
आवां तत्र निधायाभूद्वनदर्शनलोलुपः ॥१६॥
एकाग्रध्यानसंलीनमेकमुक्त्यध्वगामिनम् ।
एकं स्वात्मसुखे तृप्तं धीरमेकाकिन वरम् ॥१७॥
द्वाशापाशातिग रागद्वेषद्वयविवर्जितम् ।
कर्मात्मनोर्द्विर्द्विधाकर्तुमुद्यतं द्वितपोन्वितम् ॥१८॥
त्रिदंडारिं त्रिशल्यघ्न त्रिज्ञान गुप्तिसंयुतम् ।
त्र्यज्ञानगर्वसंत्यक्त रत्नत्रितयभूषितम् ॥१९॥
चतुराधनाधार चतुर्गतिनिवारकम् ।
चतुःकषायशत्रुघ्नं चतुर्घात्यघघातकम् ॥२०॥
पंचमगतिसंसक्तं पंचाचारपरायणम् ।
पंचसमितिसयुक्त दृढपंचमहाव्रतम् ॥२१॥
षड्द्रव्यज्ञायक पूज्य षड्जीवातिदयापरम् ।
षडन्नायतनघ्न हि षडावश्यकतत्परम् ॥२२॥
सप्ततत्त्वप्रवीणं सत्सप्तर्द्धिपरिभूषितम् ।
सत्सप्तमगुणस्थाने स्थितं सप्तभयातिगम् ॥२३॥
मदाष्टहस्तिसिंह ह्यष्टमी भूगमोद्यतम् ।
अष्टकर्मारिहंतारं सिद्धाष्टगुणकांक्षिणम् ॥२४॥

---

१. क. ख. ग. घ. मनोहरोद्याने

नवब्रह्मव्रतोपेतं दशधर्मगुणाकरम् ।
शीलायुधं दिशावस्त्रं वपुःसंस्कारवर्जितम् ॥२५॥
तपोभिः कृशसर्वांगं मुरजादिपुरस्सरैः[1] ।
मलजल्लादिसंलिप्तं ह्यकृश गुणसंपदा ॥२६॥
विश्वसत्वहितोद्युक्त भवाब्धेस्तारकं सताम् ।
कामघ्नं कामद वंद्यं पापभीत कृपापरम् ॥२७॥
इत्यादिसुगुणाधारं तस्याभ्यासे मुनीश्वरम् ।
अशोकद्रुममूलेऽप्यात्सनिविष्टं ददर्श सः ॥२८॥
ततस्तेनेदमाध्यात नग्नेनाशुचिना वनम् ।
राज्ञो निर्लज्जचित्तेन वरमेतेन दूषितम् ॥२९॥
अतः केनाप्युपायेन वनान्निर्घाटयाम्यहम् ।
लब्धो वायं मयोपायो गत्वा पृच्छामि किंचन ॥३०॥
यद्भणिष्यत्यय तत्कर्थायिष्याम्यहमन्यथा ।
यावत्तावत्समुद्विज्य यास्यत्येष वनात्स्वयम् ॥३१॥
इति ध्यात्वा ततो गत्वा त प्रदेश विधाय सः ।
मायया वंदनां दुष्टो मुन्यहूयंते ह्युपाविशत् ॥३२॥
प्रस्तावेऽस्मिन्महान् योगो यातः सम्पूर्णतां मुनेः ।
धर्म्मवृद्ध्याशिष तस्मै दत्वाऽस्थाच्छर्मणा यतिः ॥३३॥
दृष्ट्वा मुनिं सुखासीन पप्रच्छेदं दुराशयः ।
त्वयाऽत्र किं मुने ! ध्यातमेकाग्राहितसहृदा ॥३४॥
विदन्नवधिना तस्य दौष्ट्यं हीदं जगाद सः ।
यातायातं प्रकुर्वन्ति संततं स्वर्तवो यथा ॥३५॥
यथात्र संसृतौ जीवा ग्रहणंत्यंगान्यनेकशः ।
मुंचंत्यन्यानि सर्वे च स्वकर्म्मशृंखलावृताः ॥३६॥

---

१. मृदंगमध्यतपःप्रमुखैः ।

लभंते विविधं दुःखं चतुर्गतिभवं सदा ।
जन्ममृत्युजरोत्पन्नं त्रसस्थावरयोनिषु ॥३७॥
परोऽस्माज्जायते मोक्षः केषांचिच्च विरागिणाम् ।
तपो रत्नत्रयेणैव नित्योऽनंत-सुखार्णवः ॥३८॥
अनोक्तमार्गतो ज्ञात्वा मयाऽपि गृहबंधनम् ।
त्यक्त्वा मोक्षाय दीक्षेयं ग्रहीता मुक्तिदूतिका ॥३९॥
देहाद्देही पृथग्भूत सिद्धरूप निरजनम् ।
गुरूपदेशतो ज्ञात्वा ध्यायेदेकाग्रमानस. ॥४०॥
चंडकर्म्माह भो साधो किं भदो वपुरात्मनोः ।
यमी जगौ स्फुट भद्र चेतनाचेतनौ यत. ॥४१॥
चडकर्म्माप्यतोऽवादीत्साधो जीवोऽस्ति जातु न ।
यथा चंपकनाशेन तद्गंधोत्र विनश्यति ॥४२॥
तथा देहविनाशेन नश्येत्तच्चेतना स्फुटम् ।
अमुना हेतुना जीवाभावो निश्चीयते भुवि ॥४३॥
मुनि प्राह न भद्रेवं तद्गंधोऽत्र यथा पृथक् ।
दृश्यते तैललग्नोंऽगात्तथा जीवो न सशय ॥४४॥
[स उवाच][1] यते नैव यतश्चौरो भयंकदा ।
प्रक्षिप्यान्नोष्ट्रिकाया सा जतुनापिहिताखिला ॥४५॥
स तस्यामेककालेन प्रापन्प्राणविमोचनम् ।
पश्यतापि मया यत्नान्न दृष्टो[2] जोवनिर्गम. ॥४६॥
अतो जाने न भेदोऽस्ति संसृतौ देह-देहिनोः ।
किन्तु जीवः स एवागं चांगं[3] जीवो न चापर· ॥४७॥
पुनर्जगौ मुनिर्मित्र सशंख केनचित्पुमान् ।
विनिक्षिप्योष्ट्रिकायां सा लिप्तास्यर्थं हि लाक्षया ॥४८॥

---

१. क. ख. ग. घ. सो नुवाच ।
२. क. ख. ग. घ. अदर्शी ।
३. क. भिन्न ।

निःशंकं धमतस्तस्य शंखनादो बुधैर्बहिः ।
श्रूयते न च नेत्राभ्यां दृश्यते निःसरन् क्वचित् ॥४९॥
यथा शंखध्वनिस्तस्या निःसरन्नोपलभ्यते ।
तथा जीवोऽप्यतो विद्धि पृथक्त्वं वपुरात्मनोः ॥५०॥
कोट्टपालस्ततोऽप्याह नैवं पूज्य यतो मया ।
तोलितस्तस्करो जीवस्तुलयात्र पुनर्मृतः ॥५१॥
यावन्मात्र. सजीवस्तं विनाभूत्सोऽपि तत्समः ।
अतोऽवगम्यते व्यक्तमेकत्वं चात्मकाययोः ॥५२॥
ऋषिर्वाक्यमुवाचेदं निःसंग. केनचिद्घटः ।
वायुना पूरितः पश्चात्तं विनाप्यत्र तोलित ॥५३॥
ससमीरो ऽसमीरोसौ यथैकसममानकः[1] ।
तथा प्राणी स जीवोऽत्र कायःस्यादेकरूपकः ॥५४॥
अनेन हेतुनावेहि देहान्निश्चेतनाद्ध्रुवम् ।
चेतनालक्षणं जीव चान्य वाप्यनुमानत ॥५५॥
सोऽवोचद्युक्तमेवात्र नेद साधो मयैकदा ।
अन्यायी तस्करः खड खंडितोपि तिलोपमै. ॥५६॥
आत्मा दृष्टो न यत्नेन तत्सर्वांगैः निरीक्षितः ।
अतो जानेऽत्र नात्मास्ति देहादन्य कदाचन ॥५७॥
तं प्रत्याह मुनीन्द्रोऽन्वारणिखडो हि केनचित् ।
खंडितः सूक्ष्मखंडैस्तत् सर्वांगाग्निर्निरीक्षित ॥५८॥
न दृष्टो विद्यमानोऽपि प्रयत्नेन यथा तथा ।
खंडै संखडितेऽगेऽपि नांगी स्याद् दृष्टिगोचर ॥५९॥
अतोऽति निश्चय कृत्वा मद्वाक्येऽसत्यदूरगे ।
देहाद्भिन्नगुणैः पूर्णं जीवद्रव्य सचेतनम् ॥६०॥

---

१. क. ससमीरोऽसौ यथैकतोलित. सममानकः ।

सूक्ष्मं कायसमं धीरमनादिं चाविनश्वरम् ।
कर्मणां कर्तृ भोक्तारं जानीहि जिनशासने ॥६१॥
इत्याकर्ण्य स मौनीन्द्रं वाक्यं सत्यप्रतिष्ठितम्
शुद्धभावाश्रितोऽवादीन्नत्वा तत्पादपंकजम् ॥६२॥
स्वामिन् निरुत्तरो जातो किं वदात्र करोम्यहम् ।
वचश्चंडोदित श्रुत्वा जगादेदं कृपापरः ॥६३॥
यतींद्र कुरु धीमत्वं धर्मं विश्वसुखाकरम् ।
सर्वसत्वहित त्यक्त्वा पाप दुःखार्णव सदा ॥६४॥
धर्मवाक्यमथाकर्ण्य चंडो नम्रोऽवदन्मुदा ।
धर्मेन[1]सो: फल स्वामिन् कीदृशं मे निरूपय ॥६५॥
तत. प्रचक्रमे वक्तुं साधुस्तदाभिवांछितम् ।
कृपया श्रुणते भव्य कथ्यमानं मयाऽखिलम् ॥६६॥
मदोन्मत्ता गजास्तुंगा वायुवेगा हया रथाः ।
योधाश्च सबला कोशराज्यं शत्रुभयकरम् ॥६७॥
लावण्यकूपिका रामाः कामदेवनिभाः सुताः ।
बांधवाश्चानुकूल स्वकुटुंबं सुखसाधनम् ॥६८॥
निधिरत्नादयोऽन्या वा सपदोऽखिलशर्मदाः ।
यशो भोगोपभोगादिछत्रशय्यासनान्यपि ॥६९॥
यानादि-सारवस्तूनि नीरोगत्व सुरूपता ।
आज्ञाप्रभुत्वमान्यत्वं विद्वत्वादिगुणाः शुभाः ॥७०॥
इन्द्रत्वं चक्रवर्तित्वं बलकामादिसत्पदम् ।
देवत्व तीर्थनाथत्व सौख्यं लोकत्रयोद्भवम् ॥७१॥
एवमादिमनोज्ञ सद्धार्मिकैरिह लभ्यते ।
धर्मकल्पतरोः सर्वं तत्फलं विद्धि तत्त्वतः ॥७२॥

---

१. धर्मपापयोरित्यर्थः ।

दुर्व्याधौ सागरेऽरण्ये मृत्यौ [वा][1] दुर्द्धरे रणे ।
सर्वत्रापदि धर्मोऽयं शरण्यो नापरोऽगिनाम् ॥७३॥

धर्मान्माता पिता बन्धुर्धर्माद्देवाः सतां स्वयम् ।
किंकरा इव कुर्वन्ति लोकत्रयभवं सुखम् ॥७४॥

नार्योऽतिकुत्सिताः पुत्राः शत्रुतुल्याश्च बान्धवाः ।
मातृपितृकुटुम्बाद्याः ह्यश्रेयो दुःखदायिनः ॥७५॥

दारिद्र्य रोगबाहुल्यं दुर्भगत्वं कुशोनता ।
कुकुलं कुत्सिता बुद्धिः कुरूपित्वं कुजन्मता ॥७६॥

परकिंकरताऽकीर्तिर्नीचसंगोऽतिमूर्खता ।
पंगुमूकांधहीनत्वं बधिरत्वादयोऽशुभाः ॥७७॥

व्यसनित्व दीनत्वं दुर्गतिर्दुःखसंततिः ।
क्रूरत्व[2] कृपणत्व हि पापित्वं स्वल्पजीवितम् ॥७८॥

निर्दयत्वं वियोगः स्वेष्टानां चानिष्टयोगता ।
निर्गुणत्व हि हीनत्व लपटत्व कषायता ॥७९॥

कुज्ञानत्व कुसंगत्व हेयाहेयाऽविचारणम् ।
कुटिलत्वं कुमायित्वं मिथ्यात्वं चातिरागिता ॥८०॥

एवमाद्यमनोज्ञं यत् ससृतौ प्राप्यतेऽगिभि. ।
जानीहि तत्फलं सर्वं पापघस्तुरशाखिनः ॥८१॥

यत्किंचिद्दुःखदं वस्तु कुगतिर्यात्र दुःखदा ;
ये रोगा दु.सहाः पापात्तत् कृत्स्न जायते नृणाम् ॥८२॥

वपुषा मनसा वाचा मिथ्यात्वेनाव्रतेन च ।
कषायेनार्ज्यते पाप शठैः स्वानर्थकारणम् ॥८३॥

मनोवाक्काययोगेन यतिश्रावकगोचरः ।
साध्यो धर्मो दयामलो न च हिंसादिना क्वचित् ॥८४॥

---

१. क. ख. ग घ. च ।
२. क. ख. ग. घ. कृपणत्वं हि क्रूरत्वं ।

ज्ञात्वेति चंडकर्मा त्वं हित्वा पाप हि दुस्त्यजम् ।
कुरु धर्मं जिनेन्द्रोक्तं विश्वशर्म्माकरं परम् ॥८५॥
अथ प्राक्षीन्मुनिं नत्वा चंद्रकर्मातिशुद्धधीः ।
भगवन् गृहिणां धर्म्मं कृपां कृत्वा ममादिश ॥८६॥
ततो यतिजंगौ भद्र स्थिरीकृत्याशयं शृणु ।
वक्ष्यते श्रावकाचारजं समासेन सद्वृषम् ॥८७॥
आप्तागममुनीन्द्राणां श्रद्धानं तद्धि दर्शनम् ।
शंकादिदोषनिष्क्रान्त गुणाष्टकविभूषितम् ॥८८॥
तरोर्मूल यथा धाम्नोऽधिष्ठानं कथितं जिनैः ।
तथा कृत्स्नव्रतानां च सम्यक्त्वं शुद्धिकारणम् ॥८९॥
मद्यमासमधुत्याग. सहोदुबरपचकं ।
इत्यष्टौ हि व्रतादीनामादौ मलगुणाः स्मृताः ॥९०॥
द्यूतमाससुरावेश्याखेटचौर्यपरागनाः ।
सर्वपापकरं त्याज्यमिदं व्यसनसप्तकम् ॥९१॥
अणुव्रतानि पंचैव त्रिविधं स्याद्गुणव्रतम् ।
शिक्षाव्रतानि चत्वारीति स्युर्द्वादशसद्व्रता. ॥९२॥
कायवाकचित्तयोगन त्रसागिपरिरक्षणम् ।
कृतादिना विधत्ते यस्तस्याद्यं स्याद्गुणव्रतम् ॥९३॥
सर्वसस्यादिनिष्पत्तौ यथा नीरं निरूपितम् ।
समस्तव्रतसिद्धौ च तथाऽहिंसाव्रत जिनै ॥९४॥
सत्यं हित मित ब्रूयात् सारं धर्मयशस्करम् ।
मर्महिंसादिदूर यो द्वितीयं स श्रयेद्व्रतम् ॥९५॥
परस्व पतित नष्टं विस्मृतं वा क्वचित्सुधीः ।
कृत्स्नाहिं[1] वाऽत्र नादत्ते साचौर्याणुव्रतं भजेत् ॥९६॥

---

1. क. ख. कृष्णाहि वा

यः स्वनारीं विनान्येषां रामाः पश्यति मातृवत् ।
धीमान्वेश्याद्यनासक्तस्तस्य तुर्यमणुव्रतम् ॥९७॥
क्षेत्रं वास्तु धनं धान्यं दासी-दासश्चतुष्पदम् ।
आसनं शयनं वस्त्रं भांडं चेति बहिर्दश ॥९८॥
हृत्वा लोभं व्यधात्संख्या यो बाह्ये दशवस्तुनि ।
स संतोषसुधां पीत्वा पञ्चमाणुव्रत भजेत् ॥९९॥
क्रियते यात्र मर्यादा देशाटव्यादियाजनैः ।
बुधैर्दश दिशा सा प्रोच्यते दिग्विरतिः स्फुटम् ॥१००॥
कार्यं विनाघहेतुश्च प्रारंभस्त्यज्यतेऽत्र यः ।
हिंसादानादिकः सानर्थदंडविरतिः स्मृता ॥१०१॥
सर्वसंधानकं कंद मूलं कीटयुत फलम् ।
नवनीत च पुष्पं च निशाहारं चतुर्विधम् ॥१०२॥
अगालितं जलं तक्रं व्यंजनान्नादिकं त्यजेत् ।
दिनद्वयस्थितं धीमानन्यद्वागमनिंदितम् ॥१०३॥
अन्नपानादिभोगानां या संख्या क्रियते सदा ।
भूषणाद्युपभोगानां[1] स तृतीयं गुणव्रतम् ॥१०४॥
गृहपाटकवीथीग्रामादिक्रोशादिभिर्दिशाम् ।
विधीयतेऽत्र मर्यादा या सा देशावकाशिकम् ॥१०५॥
सामायिकाभिधं शिक्षाव्रतं हि द्वितीयं बुधैः ।
कार्यं कालत्रये नित्यं पापघ्नं धर्मकारणम् ॥१०६॥
अष्टम्यां च चतुर्दश्यां कर्तव्यः प्रोषधो वरः ।
गृहारंभोऽखिलं हृत्वा स्वर्गमुक्त्यादिसौख्यदः ॥१०७॥
मुनींद्राय सदा देयमाहारादिचतुर्विधम् ।
दानं शक्त्या च भक्त्या च स्वर्गमुक्तिसुखाकरम् ॥१०८॥

---

१. वारंवारमित्यर्थः ।

अंते सल्लेखना कार्या हृत्वा मोहं गृहाश्रमम् ।
सर्वहारं च मोक्षाय मुक्तिश्री दूतिका परा ॥१०६॥
इमं गार्हस्थ्यधर्मं यो विधत्ते भावपूर्वकम् ।
प्राप्य नाकं नृराज्यं च क्रमाद्याति शिवालयम् ११०॥
त्यक्त्वा पापं च मिथ्यात्वं भव्येमं गृहिणां वृषम् ।
गृहाण भावशुद्ध्याद्य मुक्त्यै हिंसादिवर्जितम् ॥१११॥
मुनिनोक्तं वचः श्रुत्वा चंडकर्मा जगौ ततः ।
यद्भवद्भिः ममाख्यातं तत्सर्वं भगवन्मया ॥११२॥
अहिंसावर्जमग्राहि यन्मे हिंसाकुलव्रतम् ।
परंपरासमायातं पितृवंशसमुद्भवम् ॥११३॥
अनूवाच वचो योगी कुलायातं यथाऽशुभम् ।
दारिद्र्यादिमहाकष्टं प्राप्याऽयोग्यं धनं बुधैः ॥११४॥
त्यज्यते च तथा त्याज्यं त्वयेदं कुलजाखिलम् ।
हिंसादिकञ्च मिथ्यात्वं शीघ्रं हालाहलोपमम् ॥११५॥
यदीम कुलधर्मं चेन्न त्वं [त्यक्ष्यसि[1]] साम्प्रतम् ।
यथेदं कुक्कुटद्वंद्वं प्राप्तं तीव्रभवावलीम् ॥११६॥
न मुंचेत् कुलजं धर्मं निद्यं सत्वक्षयंकरम् ।
तथा त्वमपि संसारे संप्राप्स्यसि न चान्यथा ॥११७॥
साश्चर्यः सोऽवदन्नाथ तामिदं प्राप्तवत्कथम् ।
[सर्वथा[2]] श्रोतुमिच्छामि सविशेषं स्वकौतुकात् ॥११८॥
यशोधरभवाच्चंद्रमत्या या भवपद्धतिः ।
सर्वोदिता मुनीद्रेण प्रागुक्ता विस्तरेण च ॥११९॥
तयोर्भवावलीं श्रुत्वाऽचेतनांगिघ्नपापजाम् ।
दुःखभीत्या महापकग्रस्तांगोऽन्ववदत्सुधीः ॥१२०॥

१. ख. ग. घ. जहासि ।
२. क. ख. ग. सर्वं ।

सत्युक्त्वा भगवन् कृष्णा हि बावयं कुलागतम् ।
धर्मनामधरं बाचा चेतसा कर्मणा मया ।।१२१।।

दृष्टिपूर्वश्च धर्मोऽणुगुणशिक्षाव्रतैर्भवः ।
जिनोक्तो निखिलो मुक्त्यै गृहीतो दुर्लभो भुवि ।।१२२।।

राजन्निति निजं श्रुत्वा चरितं यतिनोदितम् ।
आवाभ्यां दुर्लभो धर्मो गृहीतो हृदि सोऽप्ययात् ।।१२३।।

वंदनायै मुनेस्तोषातिरेकेण तदाशुभम् ।
लपित पिंजरस्थाभ्यामावाभ्यां मधुरं स्वरम् ।१२४।।

तदस्मद्रटितं श्रुत्वा मत्सुतेन महीभुजा ।
स्थितेन कुसुमावल्या राज्ञ्या मारति धामनि ।।१२५।।

स बाण चापमादाय पश्येत्युक्त्वा प्रिये मम ।
शब्दवेधित्वमाकृष्य धनुर्युक्तः शशेऽशुभात् ।।१२६।।

तेनैकेन मृतिं लब्धा तद्धर्मांशोपलभत ।
संप्रविष्टौ बतावां मत्सूनोर्भार्योदरे तदा ।।१२७।।

गर्भमाहात्म्यतो जाताऽरुचिर्मातुः पलाशने ।
सत्वानामभये दानेऽप्यभूद्दोहलको महान् ।।१२८।।

सर्वग्रामेषु देशेषु विधायाभयघोषणम् ।
राजाज्ञया ह्यमात्याद्यैस्तस्या. सस्मारितस्तदा ।।१२९।।

कृत्स्ना मनोज्ञताधारे कृमिकोटिशताकुले ।
उषित्वा तत्र वीभत्से निद्येऽधा मस्तकेन च ।।१३०।।

साधिकान्नवमासानशुचिद्वारेण निर्गतौ ।
कथंचिद्दुःखतश्चावां शुभलग्नादिके दिने ।।१३१।।

ततो मेऽभयरुच्याख्यं कृतं पित्रा च बंधुभि ।
सन्नामाभयमत्याख्यमस्या दोहलकान्मुदा ।।१३२।।

मुग्धत्वापगमे प्राप्याध्यापक धीविकाशतः ।
स्वल्पकालेन शास्त्राब्धेरावा पारगतौ शुभात् ।।१३३।।

अहिच्छत्रकुमाराय युवराजपदं च मे ।
राजाभयमति कन्यामिमां दास्यति संमुदा ॥१३४॥

इति विविधमशर्मं षड्भवं [सविभुज्य][1]
विहितदुरितपाकात्प्राप्य नृत्वं धनाढ्यम् ।
अनुविमलवृषात्कौमारसौख्यादि वार्धौ,
सुभगनृपतिमग्नौ संमुदा स्वं किलावाम् ॥१३५॥

धर्मो विश्वगुणाकरोऽसुखहरो धर्म्माश्रिताः सज्जनाः,
धर्मेणैव किलाप्यतेऽद्भुतसुखं धर्म्माय सिद्ध्यै नमः ।
धर्मान्नास्ति हितंकरस्त्रिभुवने धर्मस्य मूलं दृग्-
धर्मे चित्तमहं दधेऽथभयतो हे धर्म रक्षस्व माम् ॥१३६॥

इति भट्टारकश्रीसकलकीर्तिविरचिते यशोधरचरित्रे
कुक्कुटोत्पत्ति धर्मलाभोऽभयरुच्यभयमति-
जन्मवर्णनो नाम षष्ठः सर्गः ।

---

१. क. ख. ग. घ. संविभुक्त्वा ।

## सप्तमः सर्गः

नेमि धर्मरथे चक्रनेमिं वदेऽबह्वानये ।
मुक्तिकान्तं जगन्नाथ कामदं कामघातकम् ॥१॥
अथ मद्राज्यपट्टोत्सवे [भुक्त्यै[1]] यशोमतिः ।
श्वभि. पचशतै. सार्द्धं मृगयार्थं वनं ययौ ॥२॥
सोऽ द्राक्षीद्बहिरुद्यानेऽशोकवृक्षतले स्थितम् ।
ध्यानारूढ तप. क्षाम सुदत्त मुनिपुंगवम् ॥३॥
तद्दर्शनेन भूत्वा स [कोपेनोद्दीपितो][2]ऽग्निवत् ।
मृगया निष्फला मेऽद्य भविष्यत्यस्य दर्शनात् ॥४॥
इत्युक्त्वा[स्व[3]]धृत श्वानं मुमोच हतये मुनेः ।
सर्वैर्भटैस्तमालोक्य मुक्ताः श्वानाः समततः ॥५॥
तेऽतिक्रूरा· करालास्या वक्रदंष्ट्राहतौजसः ।
यतेर्माहात्म्यतो जाता नागा वा मंत्रशक्तितः ॥६॥
गत्वा प्रदक्षिणीकृत्य तं मुनीन्द्र शुनां ततिः ।
अधः शिरो विधायाश्वास्याद्वा[4] व्रतजिघृक्षया ॥७॥
अत्रांतरे यतीश तमागतो वंदितुं शुभात् ।
कल्याणमित्र नामास्य परं मित्रं स भूपतेः ॥८॥
सार्थवाहो धनी दक्षो दृग्ज्ञानव्रतभूषितः ।
यशोमतिं ददर्शाशु तत्र सोऽपूर्ववस्तुना ॥९॥

---

1. क. ख. ग. घ. भुक्त्यर्थं ।
2. क. ख. ग. घ. कोपाऽग्निदीपितो ।
3. क. ख. ग. घ. आत्मधृतं ।
4. आशु + अस्थात् इति सन्धिः ।

राज्ञाश्लिष्य ततः पृष्ट्वा क्षेमं देहकुटुंबयोः ।
सन्मानितो महास्नेहतांबूलाद्यैश्च जल्पनैः ॥१०॥
राजानुभणितस्तेन श्रेष्ठिना याय[1] भूपते ।
अस्मादेहि वनं यावो वंदितुं मुनिनायकम् ॥११॥
तच्छ्रुत्वाह स रुष्टो नु मया खेटकनाशतः ।
निग्रहार्हस्य यस्याद्य मित्रकार्योऽत्र निग्रहः ॥१२॥
अस्नातस्याशुचित्वस्य नग्नस्यामंगलात्मनः ।
तस्य मां वंदनां कारयसि त्वं भूमिपैर्नुतम् ॥१३॥
वणिजेदं ततो ध्यात मंगलायैव दर्शनम् ।
साधोर्यंज्जगता स्यात्तत्पापिनोऽस्यान्यथा ध्रुवम् ॥१४॥
सन्मार्गनिंदने ववध्वपोषणे साधुपीडने ।
अत्रोपेक्षानुवृत्तिश्च न कार्या पापकारिणी ॥१५॥
मित्रादीन् पाप [निरतान्][2] शक्त्या यो न निवारयेत् ।
हृदाप्यतदयांशस दुर्गतिं याति तैः समम् ॥१६॥
ध्यात्वेत्यनुजगौ भूप श्रेष्ठी जैनागमादिवित् ।
राजन्निद त्वया प्रोक्तमस्नात् यततयोऽमृजः ॥१७॥
अशुचय. तदसत्य वचो निंद्य यतः शुधि. ।
अनेकधा[3] ब्रह्मचर्य तपो मंत्रजपादिभिः ॥१८॥
सुराकुंभा यथा धौता स्युर्न शुद्धा सरिज्जलैः ।
मिथ्यात्वेंद्रियलोभाद्यैस्तथांतर्मलिनो जनाः ॥१९॥
घृतकुंभा यथा शुद्धा विना नीरैस्तदा सदा ।
यतिनो बाह्यजल्लाढ्या वृत्ताद्य तोऽतिनिर्मला ॥२०॥
शुक्रशोणितसंजाते सप्तधातुमयेऽशुचौ ।

---

१. पुण्याय इत्यर्थ ।

२. क. ख. ग. घ. पापकुर्वाणान् ।

३. शुद्धिरनेकधा इत्यर्थं ।

विष्टादिनिचिते काये शुचित्वं कः सुधीर्वदेत् ॥२१॥

अतस्तपो विशुद्धानां यतीनां ब्रह्मचारिणाम् ।
ययात्मनां सदा शुद्धिः कामिनां नासतां क्वचित् ॥२२॥

यदि स्नानेन शुद्धिश्चेद्राजंस्तर्हि मते तव ।
वंद्या मत्स्यादयः स्युर्धीवरां शुद्ध्यै न चापरे ॥२३॥

अतोऽत्र निःस्पृहा वंद्या अंगसंस्कारवर्जिताः ।
यतीन्द्रां निर्मला नान्ये गुरवो धीमता क्वचित् ॥२४॥

यदन्यच्च त्वया प्रोक्तं नाग्न्यादित्वममंगलम् ।
तद्विरुद्धं यतो नाग्न्यं सहजं सर्वदेहिनाम् ॥२५॥

नग्नोत्र याति जीवोऽयं नग्नो याति भवांतरम् ।
अतः सर्वगत नाग्न्यं मान्यं स्याद्विश्वदर्शनैः ॥२६॥

विरागिणो दृढब्रह्मचारिणो ये मुनीश्वराः ।
तृणीकृतजगत्सारास्त्यक्त तैरंबरादिकम् ॥२७॥

स्त्रीपरीषहभग्ना येनापाकर्त्तुं कुलिंगिनः ।
तद्विकारं क्षमास्तैश्च वराकैश्चीवरं धृतम् ॥२८॥

सुरेशत्वं जिनेशत्वं कैवल्यं शाश्वतं पदम् ।
चक्रेशत्वं जिनोक्तेन नग्नत्वेनात्र साध्यते ॥२९॥

[नग्नाश्चापि[1]] न ते नग्ना ये शीलवसनावृताः ।
वस्त्रावृताश्च ते नग्ना ये शीलव्रतदूरगाः ॥३०॥

अतः पूज्यं सता नाग्न्य मंगलार्थ जगत्त्रये ।
ते नाग्ना मुनयो ये ते वंद्या मुक्त्यै न चापरे ॥३१॥

भूपापर त्वया यत्प्रोक्त कार्योऽस्य मया वधः ।
तन्मे भवद्वचो भाति बालोदितमिवाशुभम् ॥३२॥

यतश्चालयितुं शक्ता ये मेरुं पाणिना भटाः ।
क्षीराब्धि सहसा पातुं चन्द्रसूर्यौ तथाशितुम् ॥३३॥

---

१. क. ख. ग. घ. नग्नेनापि ।

उद्धर्तुं हि महीं वातं स्तंभितुं तेऽपि न क्षमाः ।
मुनेः पराभवं कर्तुं कुत एव भवादृशाः ।।३४।।
तपोबलर्द्धियुक्तोऽयं दैवात्कोप व्यधाद्यदि ।
ततः कुर्यात्क्षणार्द्धेन भस्मराशिं भवादृशाम् ।।३५।।
अतः प्रसुप्तसिंहस्य यथा नोत्थापन नृप ।
हितमाकांक्षिणा युक्तं तथैवास्य महामुनेः ।।३६।।
राजन् जानासि गर्वी त्वं भूपोऽहं भूमिपैर्नुत ।
शृण्वन्नास्य कथां वक्ष्ये भवद्गर्वादिहानये ।।३७।।
कलिंगदेशनाथोऽय सुदत्ताख्यो महीपतिः ।
धीरो दक्षो विचारज्ञः प्रतापी यशसा महान् ।।३८।।
कुर्वतो यौवने राज्यमथैतस्यैकदा पुर. ।
आनीय कोट्टपालेन चौरो वस्तुयुतो धृतः ।।३९।।
नत्वा प्रोक्तमिदं नाथ हृत्वैकं गृहनायकम् ।
अनेनेह हृतं वस्तु ह्यानीतोऽतस्त्वदंतिकम् ।।४०।।
तत्स्वरूप निवेद्यातः पृष्टा राज्ञा श्रुतान्विताः ।
तस्करस्यास्य हि विप्राः क्रियते किं प्रकथ्यताम् ।।४१।।
उक्त तैश्चत्वरे नीत्वा हस्तपादप्रखंडनम् ।
नासिकाकर्ण[विच्छेदं][1] कार्यमस्याऽक्षिनाशनम् ।।४२।।
राज्ञोक्तदंडनादस्य पापं कस्य महद्द्विजाः ।
आहुस्ते तव तत्पापं भूप नान्यस्य दंडजम् ।।४३।।
आह राजा ततोऽस्यैव मोचनादेश एव हि ।
कस्यान्यायभवं[2] प्राहुस्ते तवान्यस्य न क्वचित् ।।४४।।
ततस्तेषां वचः श्रुत्वा पापभीतः स्वमानसे ।
राजन् राजाश्चिद दध्याद्भोगनिर्विण्णमानसः ।।४५।।

---

१. क ख. ग. घ. कर्णछेद च ।
२. क कान्ययश्चभव घ. कस्यानायभव ।

उपार्ज्यतेदृशं पापं राज्यं यद्भुज्यते नृपैः ।
तन्नूनं नरकांतं स्यात् ततो मेऽनेन पूर्यताम् ॥४६॥
यदि राज्यं भवेद्भद्रं कथं त्यक्तं जिनादिभिः ।
चिरं ध्यात्वेति भूपोऽयं राज्यं हित्वाऽऽददे तपः ॥४७॥
यशोमतिस्ततोऽवादीन्मित्र यद्येष पार्थिवः ।
एहि यामस्ततो नं तुक्रमावस्य कुतूहलात् ॥४८॥
ततस्तत्पाणिमादायागमच्छ्रेष्ठी स्वपाणिना ।
महापुण्योदयात् प्राप्तं मुनीश्वरपदान्तिकम् ॥४९॥
सौम्येन सोमसादृश्य दीप्त्या सूर्यसमं मुनिम् ।
रत्नाकरमिवागाधं स्थिर मेरुशिखोपमम् ॥५०॥
निःसग वायुवद्धीरं रत्नत्रयविमंडितम् ।
त्रि. परीत्य क्रमाभ्यासे नत्त्वोपाविशतांहि तौ ॥५१॥
तत्क्षणे पूर्णयोगेन ह्युपाविश्य शिलातले ।
धर्मवृद्ध्या तदा तेन तौ भव्यावभिनंदितौ ॥५२॥
तं तीव्रतपसा दीप्त दृष्ट्वा नु मुनिनायकम् ।
काललब्ध्या महीपालो भोगे निर्वेदमाप्तवान् ॥५३॥
ईदृग्गुणगणैः पूर्णं शारीर मुक्तिसाधनम् ।
हंतु कथं मयारब्ध पाणिना योगिनो वृथा ॥५४॥
अतोऽत्रायास्यापराधस्य स्वशिरश्छेदन विना ।
नापरा विद्यते शुद्धिस्ततस्तदहमादधे ॥५५॥
इति मृत्यूद्यत ज्ञात्वाऽवधिनात्र यमो जगौ ।
विरूपकमिद राजंस्त्वया संचिंतितं हृदि ॥५६॥
निंदया गर्हणेनाशु पाप नश्यति संचितम् ।
दुश्चित्तेनात्र नान्येन शिरच्छेदादिना क्वचित् ॥५७॥
ततो ज्ञातमनोर्थोऽसौ साश्चर्यो नाथ मेत्विमम् ।
अपराधं क्षमस्वाद्य कृपां कृत्वातिपापिनः ॥५८॥

इत्युक्त्वा तौ क्रमौ राजा [प्राणमच्छुद्धचेतसा][1] ।
ततः स्वपादसंलग्नं तं प्रत्याहाऽऽदरान्मुनिः ॥५९॥
नन्वस्माभिः कृता क्षांतिः सर्वत्रोत्तिष्ठ भूपते ।
यतः पूर्वं श्रुतः किं न धर्मः श्रीजिनभाषितः ॥६०॥
अहिंसामार्दवाद्याढ्यो यतीनां क्षांतिपूर्वकः ।
तृणहेमसुखाशर्मनिंदास्तुतिसमुद्भवः ॥६१॥
यद्यज्ञ. कोपि सत्साधु कोपाच्छपति पापभाक् ।
आकर्षत्यत्र वा हंति यष्ट्याद्यैः प्रायुधेन वा ॥६२॥
तत्सर्वं साधुना नूनं सोढव्यं स्वहितेच्छुना ।
कर्मक्षयाय कोपो न कार्यः प्राणात्यये क्वचित् ॥६३॥
श्रुत्वा नु तद्वचो राजा मित्रं प्रत्याह हृष्टधीः ।
तपस्तेजोऽकषायत्वमसंगत्वममूढता ॥६४॥
ज्ञानित्वं समता वीर्यं निर्ममत्वादयो गुणाः ।
मुनीनां जातरूपाणामनन्यविषया भुवि ॥६५॥
ततो वणिक्पतिः प्राह भवत्रस्ताशयं नृपम् ।
इति ज्ञानादिस्वल्पैः किं गुणैर्भूपासि विस्मितः ॥६६॥
स्वपितॄणां गतीः काश्चिन्नत्वा पृच्छ त्वमादरात् ।
भूत भावि भवद्विश्व [ज्ञातार][2] जगदीश्वरम् ॥६७॥
ततो मूर्ध्ना मुनीशं तं नत्वा प्राक्षीन्मुदा नृपः ।
पितामहः पिता माता क्वागान्मे चाम्बिका[3] विभो ॥६८॥
मुनिर्जगौ नृपासीत्ते कोऽस्यौघाख्यः पितामहः ।
दृष्ट्वैकं पलितं सोऽर्हच्छासनेऽभून्मुनिः सुधीः ॥६९॥

१. ग ख. ग. घ. ननाम शुद्धचेतसा ।

२. क. ख. ग. घ. जानान ।

३. ख. ग. चार्यिका ।

कृत्वा पूर्वं तपश्चांते संन्यासं तद्विपाकतः।
ब्रह्मोत्तरे विमानेऽभूद्दीप्तो देवो महर्द्धिकः ॥७०॥

क्रीडां कुर्वन् स्वदेवीभिः क्रीडाद्रौ भवने वने।
शृण्वन् गीतं कलं ध्वानं पश्यन्नृत्तं मनोहरम् ॥७१॥

भजन्पूजन्जिनेन्द्राणां कल्याणेषु जिनालये।
निमग्नः शर्मवार्द्धौ समुदास्ते तत्र पुण्यतः ॥७२॥

याऽमृतादिमहादेवी तेऽबा हत्वा पतिं विषात्।
निःशीलाद्योदयाद्भुक्त्वा तीव्रकुष्ठादिजा व्यथाम् ॥७३॥

रौद्रध्यानेन मृत्वागाच्छ्वभ्रं ध्वांतप्रभाह्वयम्।
छेदनं भेदनं शूलारोहणं ताडनं महत् ॥७४॥

मारणं चाग्निनिक्षेपं वैतरण्यादिमज्जनम्।
तत्रेत्येवं महादुःखं भुञ्जानासावतिष्ठते ॥७५॥

आसीद्यस्त्वत्पिता ख्यातो यशोधरमहीपतिः।
तस्य चन्द्रमती माता चंडिका-भक्तिरंजिता ॥७६॥

चंडिकाग्रेऽद्य शांत्यर्थं मूढाभ्यां पिष्टकुक्कुटः।
ताभ्यां हतः स्वहस्तेन विघ्नहान्यै च पापतः ॥७७॥

तन्महापापपाकेन त्वन्मात्रा तौ हतौ बलात्।
घोरदुःखाकुलां तिर्यग्योनिं चेमां गतौ ततः ॥७८॥

तद्यथात्र शिखिश्वानौ जाहकाही झषाझषौ।
अजावजजरंताख्यौ ततोऽभूत्वा च कुक्कुटौ ॥७९॥

मयूरादिभवे राजंस्त्वया संतापितौ हतौ।
भुक्तं दत्तं च तत्तृप्त्यै ह्यपरेभ्यस्तदामिषम् ॥८०॥

ततस्त्वया हताविष्टौ कुक्कुटौ स्वल्पधर्मतः।
जातौ त्वदात्मजौ पुष्पावल्यां तौ शर्म्मसंयुतौ ॥८१॥

मुनिनोक्तं समस्तं तच्छ्रुत्वा भूपो भयातुरः।
वयस्यास्यं तदा पश्यन् विललापाघशोचनम् ॥८२॥

हा देवतार्चने पिष्टे कुक्कुटे मारिते यदि ।
इत्थं पितृजनः प्राप्तो महापापाद् भवावलीम् ॥८३॥
सखे ऽहं किं भविष्यामि जलस्थलनभश्चराः ।
बहुधा पापिना येन मयात्मना निपातिता ॥८४॥
विलापमतिकुर्वाणः श्रेष्ठिना भणितो नृपः ।
विलापं किं मुधा राजन् [कुरुषे][1] कातरागिवत् ॥८५॥
शक्तो ऽत्र कोऽपि न त्रातुं देहिनः प्राक् स्वकर्मतः ।
धर्मं जिनोदितं मुक्त्वा सर्वजोवहितावहम् ॥८६॥
राजा ऽवादीत्ततो मित्र सखे विज्ञाप्यता मुनिः ।
तथा यथाद्य ह्यन्यै मे शीघ्रं दत्ते तपोऽद्भुतम् ॥८७॥
ज्ञात्वा दीक्षोद्यतं सो नु श्रेष्ठिनैव निरूपितम् ।
सूनवे दीयता राज्य पश्चाद्भव्यावयोस्तप ॥८८॥
आकर्ण्य तद्वचो राजा प्राह निर्वेदतत्पर ।
निर्गच्छतो गृहावासान्मे किं सून्वादिचिंतया ॥८९॥
मित्रेणोक्तस्ततो भूपो नो ऽह वच्मि तमोहतः ।
किन्तु वाक्यमिद सारं प्रजाना रक्षणाय मे ॥९०॥
पुन राजाह तर्ह्यद्य मित्र मक्षु सुताय मे ।
ददस्व निखिलं राज्य यत. स्यान्मम दोक्षणम्[2] ॥९१॥
एव यावत्समालापो दीक्षायै वर्तते वने ।
तावत् श्रुतो जनालापात्स तदतःपुरादिभिः ॥९२॥
ततो दुःखभराक्राता त्यक्त्वा स्वागर्द्धमडनम् ।
आजग्मुस्तद्वन म्लाना रटत्यो राजयोषितः ॥९३॥

---

१. क. ख. ग. घ. करोषि ।
२. दीक्षामित्यर्थः ।

तदा[1] स्वस्त्रानया सार्द्धमारुह्य शिबिकामहम् ।
आगतस्तद्वनं शीघ्रं सामंतादिभिरावृतः ॥९४॥
तत्र संसारसंत्रस्तं त्यक्त्वा राज्यपरिच्छदः ।
शोकाकुलो मुनेः पार्श्वे दृष्टस्ताभिर्मया नृपः ॥९५॥
नत्वा मुनीश्वरं तत्रोपविष्टः स यशोमतिः ।
विज्ञापितो मया साकं रामादिसकलैर्जनैः ॥९६॥
यथेंदुना विना रात्रिर्विनादित्यं पयोजिनी ।
विवेकेन विना विद्वान्नारी शीलं विना च न ॥९७॥
नाभाल्लोके तथा नाथ त्वां विना सकला प्रजाः ।
शामादयोऽपि दीनत्वं लभंते त्वं कृपापरः ॥९८॥
इति विज्ञापितोऽत्यंतदीनवाक्यैर्मनोहरैः ।
निर्वेदतत्परो भूपः सोंऽतःपुरजनादिकैः ॥९९॥
तानाह यन्मया पापमर्जितं मृगयादिभिः ।
करिष्यामि तपो घोरं तच्छांत्यै सद्वनेऽप्यहम् ॥१००॥
ततो यद्यतिनाख्यातं पित्रादीनां भवादिकम् ।
स्वबोधकारणं तेषां तेनोक्तं च तदंजसा ॥१०१॥
ततः पूर्वभवान् स्मृत्वा दुःखविह्वलमानसौ ।
तदावां मूर्च्छितौ राजन् भयभीतौ भवार्णवात् ॥१०२॥
शीतलादिक्रियां प्राप्य श्रुत्वा मात्रादिरोदनम् ।
कियत्कालं विलप्याऽऽवां लब्धचेतसौ ॥१०३॥
मूर्च्छाहेतुं प्रपृष्टोऽहं पित्रांबादिजनैस्तदा ।
मया प्राग्भवजा तेषां मत्कथोक्ताखिला स्फुटम् ॥१०४॥
तद्वाक्यश्रवणात्प्राप्य निश्चयं द्विगुणं नृपः ।
संवेगं चाप्यथोवाच कन्येयं दीयतां सखे ॥१०५॥

---

1. ख. तदाप्यनुजया ।

अहिच्छत्रकुमाराय राज्यपट्टोऽस्य बध्यताम्।
सुतस्याशु यतो दीक्षा भवेन्मे पापनाशिनी ॥१०६॥
एव तातवचः श्रुत्वा भोगनिस्पृहमानसः।
राजानं प्रत्यह वच्मि वाक्य प्राक् स्वतपःकरम् ॥१०७॥
भोगयुक्ता कथ तात श्रोतु नाहं क्षमस्ततः।
भगिन्या सहितो मुक्त्यै करिष्यामि तपोऽनघम् ॥१०८॥
भोगा नरकपथानो भोगा. सर्पोपमाश्चलाः।
धर्मध्वसकरा भोगा भोगा दुर्गतिदायिनः ॥१०९॥
विश्वदुःखाकरीभूता इहामुत्राहिताश्च ये।
एवविधाश्च जानस्तानाश्रयामि कथं खलान् ॥११०॥
दीपहस्तेन किं साध्य कूपे स्यात्पतन यदि।
श्रुत्वैतद्वचन श्रेष्ठो मां प्रत्याह पुशास्त्रवित् ॥१११॥
तपो जिघृक्षता राज्ञा राज्यपट्टोऽत्र बध्यते।
बृहत्पुत्रस्य चैतावदेषमार्गः पुरातनः ॥११२॥
यतो नृपादृतेऽभावो मर्य्यादीनां प्रजायते।
तदभावात्प्रजाभावः प्रजाभावान्न योगिनः ॥११३॥
गुर्वभावाद्वृषाभावो वृषाभावेंऽगिनोऽसुखम्।
तं नाशाय प्रणीतोऽयं क्षात्रो धर्मो विवेकिभिः ॥११४॥
ततो महामतेऽत्रैव राज्यपट्टमिम पितुः।
अहानि कानिचित्पश्चाद्यदिष्टं तत्करिष्यसि ॥११५॥
तदाग्रहान्मया पित्रोरेवमस्त्विति जल्पितम्।
ध्यात्वा स्वहृदयेऽवश्यं करिष्यामि तपोऽनघम् ॥११६॥
ततो राज्ञा ममालोके राजपट्टो महोत्सवैः।
दत्वाशिषः स्वयं बद्धः सामंतादिकसन्निधौ ॥११७॥
ततो योगिक्रमौ नत्वा हित्वा स्वामखिलां श्रियम्।
जरत्तृणमिवाशु स्वग्रहीद्दीक्षां जगन्नुताम् ॥११८॥

नृपैः पंचशतैः कल्याणमित्रेण समं नृपः।
स्त्रीसहस्रेण मुक्त्यै स त्यक्त्वा संग द्विधा तदा ॥११९॥

कुर्वन् घोरतरं तपः स्वहृदये ध्यानं च धर्मे रतिम्,
ज्ञानाभ्यासमतीवशुद्धहृदयं क्रोधाद्यरीणां जयम् ॥
व्युत्सर्गं समतां च हेय-तृण सत्सौख्यासुखादौ विह-
रन् स ग्रामपुरान् गणी यतियुतः कुर्याद्वृषोद्योतनम्॥१२०॥

अमलगुणनिधानं पूजितं लोकनाथैः,
शरणमपि मुनीनां दुःखभीतात्मनां च।
सुखशिवगतिबीजं त्यक्तदोषं धरित्र्यां,
जयतु [जयति][1] जैनं शासनं नः शरण्यम् ॥१२१॥

इति भट्टारकसकलकीर्तिविरचिते
यशोधरचरित्रे यशोमतिप्रव्रजनवर्णनो नाम
सप्तमः सर्गः ॥७॥

---

१. क. ख. ग. घ. विजयतु किल जैनं···

## अष्टमः सर्गः

वंदे श्रीपार्श्वनाथं सम[1]स्तोपद्रवनाशनम् ।
कामघ्नं कामदं धीरं तत्पार्श्वाय जगद्गुरुम् ॥१॥
अथान्य मातृभ्रातायानुज्ञाय निखिलां श्रियम् ।
यशोधनाय दत्त्वाशु विधिनाऽहं विरक्तधी. ॥२॥
सुदत्ताचार्यपादान्त दुःखदावाब्दसन्निभम् ।
दीक्षार्थं प्राप्तवान् राजभगिन्या सममेतया ॥३॥
विज्ञापितो मया योगी नत्वा तस्य क्रमाबुजम् ।
भगवन् दीयतां मे ऽस्या तपश्चाघवनानलम् ॥४॥
मुनींद्रो ऽथावदद्वाक्यं तरां तावद्युवां शिशू ।
गृह्णीतं क्षौल्लकीं दीक्षां वृहद्दीक्षाक्षमौ यत. ॥५॥
अनुल्लघ्यां गुरोराज्ञां मत्वावां विधिनाशु ताम् ।
अग्रहीष्ट त्रिशुद्ध्या स्वकर्महान्यै सुखाकरम् ॥६॥
सम्यक्त्व सद्व्रत द्वादशधा सामायिक तथा ।
प्रोषधः पर्वसु कृत्स्नसचित्त-परिवर्जनम् ॥७॥
सर्वाहारं निशित्याज्यं ब्रह्मचर्यं सुखार्णवम् ।
सर्वारंभोऽर्जन द्रव्यादि-परिग्रहहापनम् ॥८॥
आरंभानुमतित्याज्य स्वोद्दिष्टाहारवर्जनम् ।
गृहीता. प्रतिमा एकादशावाभ्यामिमास्तदा ॥९॥
सिद्धान्तपठनोद्युक्ता नानातप परायणा. ।
गंधारिण्या गणिन्या माता जनन्यश्चरति मे ॥१०॥
विश्वसत्वहितैः सारकथागमनिरूपकैः ।
कुकथाकथने मूकैः सिद्धांतश्रवणोद्यतैः ॥११॥

---

1. क. हि सर्वोपद्रव ।

बधिरैर्दुश्रुते शाननेत्रैस्तीर्थादिदर्शिभिः ।
रामाद्यालोकने चांधैः सुतीर्थगमनात्मभिः ॥१२॥
कुतीर्थव्रजने खंजैर्निष्ठुरैः कार्म्मघातने ।
सर्वप्राणिदयोपेतैः कामारिध्वंसनिर्दयैः ॥१३॥
रामाभिलाषहीनैश्च मुक्तिकांताभिलाषिभिः ।
परीषहजये धीरैः कर्मबंधऽतिकातरैः ॥१४॥
स्वल्पलोभातिगैस्त्रैलोक्य(राज्याद्भुत][1] लोलुपैः ।
अल्पाक्षसुखसत्यक्तैरनतसुखकांक्षिभि ॥१५॥
इत्यादिगुणसपूर्णैः योगिभिः सह बोधयन् ।
भव्यास्तव नगरोपांतमथाद्य प्रहरे गते ॥१६॥
आगमद्धर्मसवेगज्ञानध्यानपरायण ।
सुदत्ताख्यो महासूरिर्जिनमार्गप्रभावकः ॥१७॥
विशतो तत्पुर राजन् भिक्षार्थं स्वेच्छया ततः ।
संग्राह्यावां समानोतो भवद्भृत्यैरिहाध्वतः ॥१८॥
इति राजन् त्वया पृष्टं यत्स्पष्टं चेष्टित भुवि ।
मे ऽनुभूतं श्रुत दृष्टं तत्सर्वं कथितं मया ॥१९॥
ब्रह्मचारिवचः श्रुत्वा देवी संविग्नमानसा ।
सर्वथाप्यगिना घातं मुमोचाशुव्रत बिना ॥२०॥
तुष्टा सा तद्वनं रम्य सर्वर्तुफलशोभितम् ।
चकार पत्रपुष्पाढ्यं तदास्थ्यादिविवर्जितम् ॥२१॥
मुक्त्वा स्व भीषणं रूप विक्रियर्द्धितयामरी ।
जग्राह सुंदरं सौम्यं दिव्यभूषणभूषितम् ॥२२॥
ततो देवी ददावर्घ्यं स्वयं क्षुल्लकयोस्तयोः ।
रत्नपात्रधृतैर्दुर्वा दध्यक्षततरुद्भवैः ॥२३॥
तत्पादपतन कृत्वा धराविन्यस्तमस्तका ।
ततो ऽपसृतचेतस्का भार्द्दवाढ्या जगाद सा ॥१२४॥

---

1. क. ख. ग. घ. अद्भुतराज्यलोलुपैः ।

भवाब्धौ पतनात्पापां त्वं मां त्रायस्व सत्पते ।
दुष्टाहं किं करोम्यत्र स्वजन्मप्राणिनाशकृत् ॥२५॥
आकर्ण्य तद्वचो दीनं कृपया क्षुल्लको जगौ ।
तां स्वपादाब्ज संलग्नांसर्वांगभयकंपिताम् ॥२६॥
उत्तिष्ठोत्तिष्ठ हे देवि ! रोदनं मा वृथा कुरु ।
यतो धर्मं विनात्रैकं नान्यच्छरणमंगिनाम् ॥२७॥
एकाकी जायते संगी म्रियते च स्वकर्मणा ।
चतुर्गतिमयं घोरं भ्रमत्येको भवं चिरम् ॥२८॥
सुखी दुःखी धनी चैको निर्धनोऽनेकवेषकृत् ।
नीरोगो रोगवानेको न सहायोऽस्य कश्चन ॥२९॥
अतो जीवदयोपेतं कुरु धर्म्मं जिनोदितम् ।
पापाशर्मवने दावं सौख्यरत्नाकरं परम् ॥३०॥
इत्याकर्ण्य वचस्तस्य तं प्रत्याहामरी पुनः ।
कृपया मे ददस्वाशु स्वामिन् दीक्षा भवापहाम् ॥३१॥
शास्त्रवित् क्षुल्लकोऽवादीद्देवि दीक्षा न विद्यते ।
नारकाणां तिरश्चा च गीर्वाणाना तथा शृणु ॥३२॥
सप्तव्यसनिनो रौद्रा निर्दयाः पापपंडिताः ।
महारंभकृतः कृष्णलेश्यास्तीव्रकषायिणः ॥३३॥
जिनागमगुरूणां च निंदकाश्चातिलोभिनः ।
महामिथ्यात्वसंसक्ताव्रतदानादिपूरगाः ॥३४॥
स्वेच्छाक्षविषयासक्ता जिनधर्मनिवारकाः ।
एवमादिक्रियोपेताः यांति श्वभ्रं यथोचितम् ॥३५॥
तेषा दुःखाग्निमग्नानामार्त्तरौद्रपरायिणाम् ।
नारकाणां व्रतांशो न विद्यते जातु दुर्विधेः ॥३६॥
मायाविनोऽति निःशीलाः परवंचनतत्पराः ।
आर्तध्यानरता मूढा नीललेश्यानिदानिनः ॥३७॥
नित्यस्नानकरा वृक्षपशुसेवापरायणाः ।
इत्याद्याचरणासक्ता यांति तिर्यग्गतिं जनाः ॥३८॥

विवेकविकलानाञ्च त्रसस्थावरदेहिनाम् ।
दीक्षा न विद्यते तेषां भाराद्यै:[1]पीडितात्मनाम् ॥३९॥
दांतेंद्रियमदैर्हीना व्रतशीलादिभूषिताः ।
ज्ञानिनोऽवद्यभीताश्च तपोऽग्निक्लेशकारिणः ॥४०॥
जिनधर्मरता जैना निर्लोभा निर्मलाशयाः ।
विनोता जिनगुर्वादीनां दशधर्ममण्डिताः ॥४१॥
एवमादिगुणोपेताः समाधिमरणान्विताः ।
स्वर्गं व्रजन्ति सौख्याब्धि दृग्विशुद्धा नरा भुवि ॥४२॥
सौख्यसागरमग्नानां विषयासक्तचेतसाम् ।
देवाना [हि] व्रतं नांव तेषां जातु न विद्यते ॥४३॥
आर्जवादिगुणोपेताः स्वल्पारंभपरिग्रहा ।
सत्कुलरूपादिसंयुक्त[2] जीवा नृत्व भजंति च ॥४४॥
रागिणां नीचजातीनां विकलांगशठात्मनाम् ।
दीक्षा कषायिणां नास्ति नृणां कुटिलचेतसाम् ॥४५॥
संसारभयभीताना ज्ञानिनां मोक्षकांक्षिणाम् ।
पुंसां स्यादर्हती दीक्षा नान्येषां देवि जातुचित् ॥४६॥
अतो गृहाण सम्यक्त्वं शकादोषादिदूरगम् ।
निःशकादिगुणोपेत मुक्तिमूल त्रिधाऽमरि ॥४७॥
जिनेन्द्रान्न परो देवो नास्ति धर्मो दयां विना ।
निर्ग्रन्थात्सद्गुरुर्नान्य एतत्सम्यक्त्वकारणम् ॥४८॥
इति तद्वाक्सुधां पीत्वा काललब्ध्या मुदाऽमरी ।
नत्वा ददौ तदा दृष्टि शकादिमलवर्जिताम् ॥४९॥
अथार्हद्धर्मसम्प्राप्ति जातात्यानन्दचेतसा ।
आदाय मर्म्मभृ गारं गदितोऽसौ व्रती तथा ॥५०॥

---

१. क. ख ग. घ. भारादि ।
२. ख. ग घ. सत्कुलरूपादिसंयुक्त ।

व्रतिन्मम दयां कृत्वा गृहाण गुरुदक्षिणाम् ।
प्रज्ञप्त्याख्यां महाविद्यां सर्वभोगादिदायिनीम् ॥५१॥
अन्वाह क्षुल्लको देवि त्वया मे वंदना कृता ।
गृहीतः परमो धर्मो नोऽत्र तेन प्रपूर्यते ॥५२॥
यतः श्रीहेमभूधाममन्त्रतन्त्रांजनादिभि. ।
विद्यया चागिना दीक्षा नश्यत्यत्रातिरागतः ॥५३॥
ततोऽतिनिर्ममत्व च निःसगत्वं विरागताम् ।
सा वात्सल्यादिकं ज्ञात्वा[1] ननामास्य क्रमाबुजम् ॥५४॥
अथासौ सद्दयोपेत सर्वाध्यक्ष नृप जगौ ।
सद्वचो धर्म्ममूल त्व मारिदत्त शृणु स्फुटम् ॥५५॥
अद्य प्रभृति जीवाना वध नामापि मा जनाः ।
गृह्णीध्वं चेतसा जातु घोरपापनिबधनम् ॥५६॥
एव कृते च युष्माक सर्वशान्तिः सुभिक्षिता ।
जायतेऽत्रान्यथा कृत्स्नरोगक्लेशादिक महत् ॥५७॥
एवमुक्त्वा सभामध्ये त्रि.परीत्य निजं गुरुम् ।
मुदा नत्वा मुहुः पादौ ततो देवी तिरोदधे ॥५८॥
संवेग परम प्राप्या [थावोचत्][2] त महीपतिः ।
दीक्षा प्रयच्छ पापघ्नामद्य नः क्षुल्लकप्रभो ॥५९॥
आह सोऽत्र समर्थोऽहं दातु दीक्षा न ते नृप ।
दीक्षार्थं किंतु यामो मद्गुरूणां निकटे द्रुतम् ॥६०॥
साश्चर्यः सोऽन्विदं चित्ते चिंतयामास शुद्धधीः ।
सामंतादिमहीपालाः स्वमूर्ध्ना मां नमंत्यहो ॥६१॥
देवतां प्रभजेऽत्राहं सा नमत्येव क्षुल्लकम् ।
[स चापरं[3]] यतीशञ्च धर्ममहात्म्यमीदृशम् ॥६२॥

---

१. क. कृत्वा ।
२. क. ख. ग. घ. अथोवाच ।
३. क. ख. ग. घ. सोप्यपरं ।

तत्राथावधिना ज्ञात्वा मारिदत्तं प्रबोधितम् ।
आगतो योगिभिः सार्द्धं सुदत्त-मुनिपुगवः ॥६३॥
शिलातले समासीनं मूर्न्ना तं क्षुल्लक. समम् ।
मारिदत्तादिभिर्भक्त्या ननामाशु परैर्जनैः ॥६४॥
ततो नत्वा नृपो ऽ वादीत्त मे नाथ निरूपय ।
भवावलीः[1] कृपा कृत्वा सर्वसन्देहनाशनीः[2] ॥६५॥
यशोर्थ-चद्रमत्योर्मे यशोधरमहीपतेः[3] ।
अमृतादिमहादेव्या भैरवानंद-योगिनः ॥६६॥
राज्ञाश्च कुसुमावल्या यशोमतिमहीपतेः ।
चडभार्यास्तथाऽश्वस्य गोवर्द्धनवणिक्पतेः ॥६७॥
कुब्जकस्यापि कोणस्य सर्वान् पूर्वभवान्प्रभो ।
पुण्यपापफलोत्पन्नान् कथयानुग्रहाय मे ॥६८॥
अथावादीन्मुनीद्रोऽसावेकचित्तेन भूपते ।
शृणु ते ऽहं समासेन वक्ष्ये तेषा कथा शुभाः ॥६९॥
अत्र गधर्वदेशोस्ति गधर्वपुरनायक ।
गधर्वाख्यो नृपस्तस्य विध्यश्री· स्यान्मनोरमा ॥७०॥
तयोर्गंधर्वसेनाख्य पुत्रोऽभूत् पुत्रिका तथा ।
गधर्वश्री स पुण्येन भुक्ते राज्यसुखं मुदा ॥७१॥
तद्राज्ञो राम नामासीन्मत्री तस्य प्रियाऽभवत् ।
चद्रलेखा तयोस्तु जितशत्रु-भीमसज्ञकौ ॥७२॥
स्वयवरविधानेन ह्येकदा जितशत्रुणा ।
विभूत्या परिणीता सा गधर्वश्री नृपात्मजा ॥७३॥

---

१. क. भवावली ।
२. क. नाशनीम् ।
३. क. ख. ग भूपतेः ।

गधर्वोऽगात्कदाचिच्च आखेटार्थं नृपो वनम् ।
तत्रैकं मृगमुद्दिश्य स मुमोच शर व्यधात् ।।७४।।
तन्मृगी भर्तृस्नेहेन प्रविष्टास्यांतरे तदा ।
नष्टो भयातुरो दूर स राज्ञा सा मृता मृगी ।।७५।।
आरोपिता स्वभृत्यस्य स्कधे पश्यन्पराङ्मुखः ।
स दृष्ट्वा ता भ्रमन् दीनो रटे स्नेहादितोऽमुतः ।।७६।।
विलोक्य तं वियोगार्तं भूपो निर्वेदमवाप स. ।
संसार-देह-भोगेषु कारुण्यात्तत्क्षण शुभात् ।।७७।।
धिग्मा च कामुकं मूढ कार्याकार्याविचारकम् ।
परपीडाकरं निद्य पापिन प्राणिघातिनम् ।।७८।।
इत्यात्मान विनिद्योच्चैर्हृत्वा राज्यं तदा ददौ ।
दीक्षां शर्मखनी कुर्यात्तपोऽत्र विविध मुनि· ।।७६।।
गंधर्वसेन एवापत् पितृराज्य शुभोदयात् ।
कोश-सैन्यादिजा लक्ष्मी चाधिका स्वपितुः क्रमात् ।।८०।।
भक्त्या गधर्वसेनेनैकदा गत्वा पिता निज ।
सन्यासस्थो महाभूत्या वदितो धर्म्महेतवे ।।८१।।
पुत्रभूतिं विलोक्याशु स निदान चकार वै ।
ईदृग्विभूतये मूढ ससारासक्तिकारणम् ।।८२।।
माणिक्येन यथा काच गर्द्दभ हस्तिनाऽत्र च ।
कश्चिद्दुर्बुद्धिरादत्ते तथा सा तपसा श्रियम् ।।८३।।
उज्जयिन्यां ततो मृत्वा यशोबधुर-भूपतेः ।
यशोर्थाख्य सुत. सो ऽभून्निदानाच्छ्रीविमडितः ।।८४।।
परिव्राजकवेष सा धृत्वा मासादिप्रोषधात् ।
कायक्लेश च कृत्वा विंध्यश्रीर्मृत्वा ततोऽभवत् ।।८५।।
अजितागदराजस्य पुत्री चंद्रमती शुभा ।
परिणीता [1]यशोर्थेन पूर्वंमिथ्यात्ववासिता ।।८६।।

---

१. कीर्तिघोषेन ।

या मंत्रिसूनुना[1] भ्रष्टा[2] परिणीता नृपात्मजा[3] ।
भीमाख्य देवरेणाभा कामासक्ता बभूव सा ॥८७॥

तद्दुराचारमालोक्य केनचित्प्रतिपादितम् ।
नारीनिंदां विधायाथ वैराग्यं भोगवस्तुषु ॥८८॥

त्यक्त्वा श्रियं च तां पापा [मग्रहीत्][4] संयमं परम् ।
जितशत्रुः सुधी मुक्त्यै शीघ्रं विश्वसुखार्णवम् ॥८९॥

विधिना नु तपः कृत्वा मृत्वा यशोर्थभूपतेः ।
चंद्रमत्यां सुत सो ऽभूद्यशोधर[5] समाह्वयः ॥९०॥

भूपपुत्र्याश्चरित्रं तद् दृष्ट्वा कामविरक्तधीः ।
ब्रह्मचर्यं स जग्राह् राममत्री स्वभार्यया[6] ॥९१॥

ब्रह्मचर्यफलेनातस्त्यक्त्वा प्राणान् बभूवतुः ।
विजयार्धगिरौ तौ दंपती विद्याधरौ शुभौ ॥९२॥

गंधर्वसेन भूपोऽपि कुकर्म भगिनीभवम् ।
तच्छ्रुत्वा तां विनिंद्योच्चै निर्वेदं प्राप धामनि ॥९३॥

हित्वा सर्वं निजं राज्यं सता त्याज्यं समाददे ।
दीक्षां मुक्तिसखी रम्यां वद्यां लोकत्रयाधिपैः ॥९४॥

ततस्तपो विधायोच्चैरंते सन्यासमेव च ।
निदानेनात्र संजातो मारिदत्तस्त्वमेव हि ॥९५॥

शोषयित्वा स्वकाय सा गंधर्वश्री तपोग्निना ।
जातामृता महादेवी मृत्वा शीलादिदूरगा ॥९६॥

दुराचारी स भीमोऽपि मृत्वाऽभूत्कुब्जकोऽधमः ।
अतः कथानक राजन् शृण्वन्यद्धर्मकारणम् ॥९७॥

---

१. जितशत्रु ।
२. ख. ग. घ. दुष्टा ।
३. गंधर्वसेना ।
४. क. ख. ग. घ. जग्राह् ।
५. पूर्वभवे जितशत्रुः ।
६. चन्द्रलेखया सहितः ।

अथ काचित्तपः कृत्वा स्त्रोतापसमतोद्भवम् ।
दत्वा कुपात्रदानं तत्फलतः प्राग्भवे शठा ॥९८॥
यशोर्धनृपतेर्जाता चन्द्रलक्ष्मी· प्रिया शुभा ।
चद्रमत्याः सपत्नी सा वैरद्वेषान्विताशया ॥९९॥
ततोऽर्जिताघपाकेन मृत्वाभूद् घोटको महान् ।
उज्जयिन्या हत पूर्ववैरेण महिषेण स. ॥१००॥
चद्रमती चरेणाशु जल पातु समागत ।
सिप्रानदीमतो राजन् वैर कार्य न केनचित् ॥१०१॥
मृत्वा स मिथिलापुर्या जिनदत्तस्य श्रेष्ठिन ।
दृग्व्रतालकृतस्तापि गृहेऽभूद्वृषभोऽशुभात ॥१०२॥
धेनगर्भेऽशुभेऽतीव पीडितागोऽतिदु खभाक् ।
म्रियमाणस्य तस्यैकदा वृषभस्य धीमता ॥१०३॥
प्रदत्त श्रेष्ठिना पचनमस्कारो हितेच्छना ।
सर्वसौख्याकर. सारो विश्वविघ्नविनाशकः ॥१०४॥
महामत्रफलेनासौ मृत्वा स वृषभो नृप ।
त्वदभार्या रूपिणीगर्भे ह्यवतीर्णोऽत्र वर्तते ॥१०५॥
स ते राज्यश्रिय भोक्ता भविष्यति न सशयः ।
स्वकुलाबरसूर्योऽनुपमाऽनेकगुणमडितः ॥१०६॥
प्राक्तनो राममत्री यो जातो विद्याधर पुन ।
अणुव्रतादिना पुण्यमर्जयित्वा शभोदयात् ॥१०७॥
मुक्त्वा प्राणान् शुभध्यानात् यशोधरमहीपते· ।
यशोमतिकुमारोऽभूत्सोऽतोऽतिसुदराकृति ॥१०८॥
प्राक्तना मत्रिपत्नी या चद्रलेखा खगी ततः ।
सा[1]पि भर्त्रा सम पाल्य कानिचित्सदव्रतान्यत ॥१०९॥

---

१. चंद्रलेखा ।

हृत्वा कार्यं स्वपुण्येन जाताऽत्र कुसुमावली ।
भवत् सहोदरी भूप यशोमतिरतिप्रदा ॥११०॥
चित्रांगदो ऽथ भूपस्ते पिताऽसीद् यो महीपतेः ।
तुल्य राज्य प्रदायाभूत्परिव्राजक एव स. ॥१११॥
परिभ्रम्य कुतीर्थानि क्लेशयंस्तपसा वपुः ।
अज्ञानेनैकदा प्राप प्राक्तन स्वपुरं शठ. ॥११२॥
अत्र देव्या मठे दृष्ट्वा जनैः कृतमहोत्सवम् ।
देवतायै विधायाशु निदान मूढमानस. ॥११३॥
मृत्वा स[1] चंडमारीय जाता देवी निदानतः ।
अतो राजन्निदान न कर्त्तव्य भवकारणम् ॥११४॥
तेऽप्यासीच्चित्रलेखा या माता [पूर्वतने][2] भवे ।
सा मृत्वा भैरवानद· संजातोऽयं विधेर्वशात् ॥११५॥
अतो मम कथा राजन् प्राक्तना शृण सभवेत् ।
उज्जयिन्या महीपालो यशोबधुर नामभाक् ॥११६॥
करोति मिश्रभावेन दानपूजादिक सदा ।
कुलिगिना मुनीना च भवित [व्यामूढमानस ][3] ॥११७॥
मृत्वा स शुभभावेन कलिगविषये मुत· ।
भगदत्तस्य राज्ञोह् जातो वैराग्यमानस ॥११८॥
उज्जयिन्या यशोर्थस्य गुणसिधुसमाह्वय· ।
आसीन्मंत्री विचारज्ञो य स दत्वा निज पदम् ॥११९॥
नागदत्ताय पुत्राय शभध्यानेन संस्थित ।
स्वगृहे नयपाकेन कृत्वा प्राणविसर्जनम् ॥१२०॥

---

१. चित्रागद-राजा चडमारी देवी जाता इत्यर्थः ।

२. क. ख. ग. घ प्राक्तने ।

३. क. ख. ग घ. स मूढमानस ।

पुत्रो ऽभूच्छ्रीपतेः श्रेष्ठिनो गोवर्द्धन नामभाक् ।
यशोमतेर्महामित्रो दृग्व्रतादिविभूषितः ॥१२१॥
इत्युक्ता मुनिना सर्वाः कथा. श्रुत्वा नृपो मुदा ।
निर्वेदं भव-भोगादौ प्राप्यावादीद्यतिं प्रति ॥१२२॥
भगवन् मे कृपां कृत्वा[1] दीक्षा देह्यघनाशनीम् ।
भव-भ्रमण-भीतस्य मुक्तिकांतासखीं पराम् ॥१२३॥
ततो हित्वा द्विधा ग्रथ पचत्रिशन्नृपैः समम् ।
आददे सयम मुक्त्यै मुनीन्द्रवचनेन स· ॥१२४॥
कौलिको भैरवानदो नत्वा तत्पादपंकजम् ।
विनिंद्य स्व दुराचार ययाचे मुनिसंयमम् ॥१२५॥
योग्याह भद्र ते दीक्षा विद्यते न जिनागमे ।
स्वखंडागुलिदोषेणाऽतो गृहाण मुदा द्रुतम् ॥१२६॥
श्रावकव्रतसर्वाणि संन्यासेन सम यत. ।
द्वाविंशति दिनान्येव जीवितव्य तवास्ति वं ॥१२७॥
ततो मुनीन्द्र-वाक्येन व्रत सन्याससयुतम् ।
मुदादाय सुधी सोऽस्थाद्धर्मध्यानेन मुक्तये ॥१२८॥
चतुराराधनां[2] सोऽते आराध्य स्वमनो दृढम् ।
स्थापयित्वा जिनेन्द्राघ्री विशोध्याशु निज वपु ॥१२९॥
तपसाऽग परित्यज्य द्वाविशति दिनेन च ।
सनत्कुमारनाके भैरवानदोऽमराऽभवत् ॥१३०॥
निरौपम्यं निराबाधं कृत्स्नाक्षप्रीणनक्षमम् ।
चिर भुक्ते सुख देवोऽमा देवीभिर्महर्द्धिक ॥१३१॥
नत्वाऽभयरुचिस्तत्र स्वगुरु मुक्तिहेतवे ।
मुक्त्वा बाह्यातर सग बृहद्दीक्षा समाददे ॥१३२॥

---

१. क. ख. ग. घ. मे भगवन् कृपां कुरवा ।

२. दर्शन-ज्ञान-चारित्र-तप इत्यर्थः ।

हृत्वाऽभयमतिः संगमार्यिकाशु बभूव सा ।
मातुरंतेथ नाशाय धर्मध्यानपरायणा ॥१३३॥

आदाया ऽनशन यावज्जोव निश्चलमानसौ ।
शुभध्यानरतौ धीरौ धर्मध्यानेन तौ स्थितौ ॥१३४॥

दृक्शुद्धि ज्ञानवृत्तौ च निर्मलौ तौ तपोऽनघम् ।
आराध्य जिनपादौ च धर्मध्यान स्वभावनाम् ॥१३५॥

कृशीकृत्य निज देह पक्षेन [तपआदिभि ][1] ।
जित्वा परीषहान् सर्वांस्तत्र देवी वने शुभे ॥१३६॥

त्यक्त्वा प्राणान् शुभध्याने नैशाने सुरसत्तमौ ।
कल्पे बभूवतुर्हत्वा स्त्रीलिंगं दृग्विशुद्धितः ॥१३७॥

ज्ञात्वा सावधिना पूर्व भव च स्वतप फलम् ।
जैने तौ शासने रम्ये दृढचित्तौ बभूवतु ॥१३८॥

ततोऽकृत्रिमचैत्यालयेषु मेर्वादिषु स्वयम् ।
कुरुतः परमा पूजा कल्याणेषु जिनेशिनाम् ॥१३९॥

देवीभिर्विविधा क्रीडा क्रीडाद्रौ च वनादिषु ।
क्रीडतो मधुरैर्गीतै नृत्यैर्नेत्रप्रियंकरै ॥१४०॥

स्रग्दिव्यावरभूषाद्यौ सप्तधातुविवर्जितौ ।
त्रिज्ञानिनौ सुरै सेव्यौ विश्वाशर्मातिगौ सुरौ ॥१४१॥

भुजानौ विविध शर्म निरौपम्य दिवास्पदे ।
गत कालं न जानतौ तिष्ठतस्तौ शुभोदयात् ॥१४२॥

ततोऽगमत्सुदत्ताख्यो गणी विंध्यगिरि समम् ।
सघेनासन्नभव्याना कुर्वत् सबोधनं परम् ॥१४३॥

तत्रादायाथ सन्यासं त्यक्त्वाहार चतुर्विधम् ।
आराधना विधान चतुर्धाराध्य दृढव्रती ॥१४४॥

---

१. क. ख. ग. घ. तपसादिभि ।

स्वप्राणान्विधिना त्यक्त्वा स्वतप.परिपाकतः ।
स कल्पे लातवाख्येऽभून्महान् देवो महर्द्धिक ॥१४५॥
महर्द्धिकामरैः सेव्यो देवीभिश्च स प्रत्यहम् ।
कुर्वन् पूजा जिनेन्द्राणा मग्नोऽस्थाच्छर्मसागरे ॥१४६॥
यशोमतिर्मुनिर्मारिदत्तो गोवर्धनो यति ।
तपसा क्षीणसर्वांगा आर्यिका कुसुमावली ॥१४७॥
एते सर्वे प्रपाल्योच्चै. प्रव्रज्या परमेश्वरीम् ।
अंते संन्यासमादाय प्राणास्त्यक्त्वा समाधिना ॥१४८॥
स्वस्व [व्रता][1] नुसारेण जाता स्वर्गे यथायथम् ।
देवा महर्द्धिका सेव्या देवताभिर्निरन्तरम् ॥१४९॥

एव देवगति वृषोदयवशाद्यात्येव सद्धार्मिका,
पापाद्दुर्गतिमेव पापनिरता मिथ्यात्वसवासिता ।
ज्ञात्वेतीह विहाय पापमखिल मिथ्यात्वमूल च भो,
धर्म्मं विश्वसुखार्णव प्रतिदिन यत्नात्कुरुध्व बुधाः ॥१५०॥

धर्म श्रीजिनभाषित सुखनिधि धर्म सुमित्र सता,
धर्म श्वभ्रग्रहार्गलः शिवपथो धर्मश्च माता पिता ।
धर्म्मो बांधव एव नाकपऽकृत्स्वामी च धर्म परो,
धर्मो दृग्जनितः शिवाय भवतात् सद्धर्मिणा नोऽत्र च ॥१५१॥

तीर्थेशा आखिलाश्च ये ऽन्नरहिता सिद्धास्त्रिलोकाधिपाः,
सर्वे यत्र मुनीश्वरा हितकरा. स्वर्मोक्ष-सौख्यप्रदा ।
वंद्या विश्वजनै सदास्तुतपदा. पूज्याश्च नाकाधिपैः,
अंतातीतगुणार्णवा स्वविभवं दद्युश्च ते नोऽखिल ॥१५२॥

यशोधराख्य विमल चरित्र,
पठति ये भव्यजनास्त्रिशुद्ध्या ।
शृण्वति ये प्राप्य शुभ च नाक,
सद्दृष्ट्यो याति शिवं क्रमात्ते ॥१५३॥

---

१. क ख ग. घ स्वस्वतपोऽनुसारेण ।

न कीर्ति-पूजा प्रचुरेच्छया न मया कवित्वाद्यभिमानहेतोः ।
किन्तु कृतोऽयं परमार्थवृत्याग्रंथः स्वकर्म्मक्षयहेतवे च ॥१५४॥

मात्राक्षरैः संधिपदादिभिश्च न्यूनं यदुक्तं हि मया प्रमादात् ।
अज्ञानतः किंचिदपीह तत् संक्षाम्यन्तु[1] सर्वविदो मुनींद्राः ॥१५५॥

ग्रथसारमिदमेव यतीशाः कृत्स्नदोषरहिताः श्रुतपूर्णाः ।
शोधयतु तनु शास्त्रधरेण कीर्तितं मुनिसमस्तकीर्तिना ॥१५६॥

वीरो विश्वहितकरो गुणनिधिर्वीरंश्रिता ज्ञानिनो,
वीरेणैव किलाप्यतेऽखिलसुखं वीराय मूर्ध्ना नमः ।
वीरान्नास्त्यपरो नृणां भवहरो वीरस्य मुक्तिः प्रिया,
वीरे चित्तमहं दधेऽथ हृदये हे वीर मां पालय ॥१५७॥

विश्वार्च्यं धर्मबीज जिनवरगदित सर्वतत्त्वप्रदीपम्,
भीताना दु.खवार्धे शरणमपि पर सेवित ज्ञानवृद्धैः ।
सद्वन्द्यं लोकनाथैरखिलहितकर कामद कामहंतृ,
चाराध्य भव्य सिद्धं भुवि दुरितहर ज्ञानतीर्थं हि जीयात् ॥१५८॥

नवैवास्य शतान्येव तथा षष्ट्यधिकान्यपि ।
श्लोक-सख्या परिज्ञेया सर्वग्रथस्य लेखकैः ॥१५९॥

इति श्रीभट्टारकसकलकीर्तिविरचिते यशोधरचरित्रे
कथाचये अभयरुचिभट्टारक-स्वर्गगमनवर्णनोनाम
अष्टम. सर्गः ॥८॥

इति यशोधरचरित्र समाप्तम्

1. क. ख. ग. घ. तन्मे जहीत स ।

# परिशिष्ट

## सचित्र प्रतियाँ

यशोधरचरित की कुछ सचित्र प्रतियाँ भी उपलब्ध होती हैं। इसके लिए राजस्थान अग्रणी रहा है। लगता है, यहाँ चित्रकारों के लिए यशोधर का चरित्र बहुत भाया है। फलत: उन्होने प्रतियों को सचित्र बनाकर उनमे समरसता का रस घोल दिया। रइधू, सोमकीर्ति, सकलकीर्ति आदि आचार्यों के यशोधरचरित के विभिन्नकथानक पहलुओ को कुशल चित्रकारों ने अपनी तूलिका मे समेट लिया है। जयपुर, नागौर, ब्यावर आदि ग्रन्थभण्डारो मे ऐसी अनेक प्रतियाँ प्राप्त होती हैं।

प्रस्तुत यशोधरचरित की सचित्र पाण्डुलिपि लूणकरण जैन मन्दिर जयपुर मे सुरक्षित है। श्री प० मिलापचन्द शास्त्री के सान्निध्य मे इस मन्दिर का ग्रन्थागार सुव्यवस्थित है। नष्ट होने से बचाने के लिए उन्होने इसे काँच मे जड़ा दिया है। इस पाण्डुलिपि की पत्रसख्या ४४ है जिनके किनारे अलकृत रूप से सजे हुए हैं। इनमे साधारणत. हरा, लाल, सफेद और गहरे पीले रग का प्रयोग हुआ है। सवाई माधोपुर और पार्श्वनाथ मन्दिर जयपुर की प्रतियाँ भी सचित्र हैं पर उनके पत्र अलकृत नही हैं। इन सभी प्रतियो मे यशोधर के भवान्तरो से सम्बद्ध चित्रो के साथ ही उपसर्ग, उपदेश, भक्ति और प्राकृतिक सौन्दर्य के बीच पशु-पक्षियो का सुन्दर चित्रांकन हुआ है।

जैन चित्रकला की ओर कदाचित् सर्वप्रथम विशेष ध्यान आकर्षित किया १९१४ मे आनन्द कुमार स्वामी ने। बाद मे इस क्षेत्र मे अजितघोष, गागुलि, मोतीचन्द, मुनि पुण्यविजय आदि विद्वानो ने कार्य किया। यह चित्रकला, पालकाल मे भित्तिचित्रो से ताड़पत्रो पर आयी और फिर उसे कागद पर उकेरा जाने लगा। डॉ० मोतीचन्द ने जैन चित्रकला को तीन कालो मे विभाजित किया है--- १. ताड़पत्र काल---११००-१४०० ई० तक जिसमे गुजरात और कर्नाटक मे तीर्थंकर, देवी-देवताओ और महापुरुषों के वैराग्योत्पादक चित्र निबद्ध हैं। २. कागद काल-१४००-१६०० ई० तक जिनमे लाल रग का अधिक प्रयोग हुआ और प्राकृतिक दृश्यो के साथ-साथ किन्नरियों के चित्र खूब बनाये गये। गुजरात और राजस्थान में इस शैली को महापुराण और कल्पसूत्र जैसे ग्रन्थो के चित्रों मे देखा जा सकता है। ३. उत्तर काल---१७ वीं शताब्दी के बाद इस काल में बुन्देलखण्ड, मालवा और राजस्थान विशेष केन्द्र रहे हैं जहाँ के चित्रों में मुगल शैली का प्रभाव स्पष्टतः दिखाई देता है।

चित्रकारिता मे रेखा, रूप, वर्ण, ताल और अन्तराल का विशेष महत्त्व होता है। रेखाओ और रगो के सम्यक् विधान से चित्र की विशेषता देखी जाती है। पश्चिमी शैली मे प्रारम्भत हरे रग का प्रयोग कम और नीले रंग का सर्वाधिक हुआ। विषय की सूक्ष्मता पर मुगल, राजपूत, राजस्थानी शैली मे अधिक ध्यान रखा गया। यह वस्तुत. अपभ्र श काल था जिसमे कथानको को विविध रगो मे गहनता और सूक्ष्मतापूर्वक रगा गया। इसलिए इसे अपभ्र श शैली भी कहा जाता है। इसके बाद पहाडी शैली का भी प्रभाव दिखाई देता है। मुगल शैली में ईरानी और भारतीय शैलियो का समिश्रण रहा है। राजस्थानी शैली १५०० से १९०० ई० तक देखी जाती है जिसमे भारतीय और मुगल शैली को एक साथ अपनाया गया। सुनहरे रगो के प्रयोग मे वक्ररेखा और वेशभूषा पर फारसी शैली का प्रभाव दृष्टव्य है। यही अपभ्रंश शैली मुखरित हुई है।

यशोधरचरित की प्रस्तुत सचित्र पाण्डुलिपि राजस्थानी चित्र शैली का प्रतिनिधित्व करती है। इसमे राजस्थानी शैली की अलकारिता तथा मुगल शैली की सूक्ष्मरेखागन पद्धति मे भडकीली रगयोजना का सुन्दर समन्वय हुआ है। लूणकरण मन्दिर की इस प्रति के कतिपय महत्त्वपूर्ण चित्रो को हम यहाँ पाठकों और अध्येताओ की जानकारी के लिए दे रहे है।

## चित्र-फलक विवरण

1. आदि तीर्थंकर ऋषभदेव का स्तुति-दृश्य।
2. मारिदत्त राजा का राजभवन दृश्य।
3. राजपुर नगर के राजा मारिदत्त का वैभव दृश्य तथा भैरवानन्द कापालिक का आगमन।
4. चण्डमारी मन्दिर मे भैरवानन्द के कथनानुसार आकाशगामिनी विद्या-प्राप्ति के उद्देश्य से मारिदत्त द्वारा यज्ञबलि के निमित्त एकत्रित पशु-युगल।
5. आचार्य सुदत्त ससघ राजनगर के बाह्योद्यान मे। शृ खलाबद्ध क्षुल्लक-युगल का राजा के समक्ष प्रस्तुतीकरण।
6. राजा मारिदत्त द्वारा क्षुल्लक-युगल पर प्रहार की तैयारी।
7. यशोधर के प्रथमभव से सबद्ध कथानक। अवन्ती देश की उज्जयिनी नगरी के राजा यशोधर और महारानी चन्द्रमती के पुत्र यशोधर का बाराट(बरार) देश के राजा विमलवाहन की पुत्री अमृतमती के साथ

पाणिग्रहण सम्बन्धी वार्तालाप तथा तैयारी।

8. यशोधर और अमृतमती का परिणय-दृश्य।

9. यशोधर अमृतमती का वार्तालाप। कुब्जक द्वारा अमृतमति का प्रताडन।

10. प्रासाद मे यशोधर का वापिस पहुंचना।

11. यशोधर का नारी के विषय मे चिन्तन और यशोमति राजकुमार को राज्यसमर्पण। माता चन्द्रमती के आग्रह पर चण्डमारी के मन्दिर मे यशोधर द्वारा आटे के मुर्गे की बलि।

12. यशोधर का मयूरभव कथानक। कोटपाल द्वारा राजा यशोमति को मयूर (यशोधर) तथा श्वान (माता चन्द्रमती) का समर्पण।

13 यशोमति और राजपरिकर। अमृतमती और कुब्जक का प्रणय प्रसग। मयूर का दोनो पर आक्रमण।

14. मयूर पर अमृतमति व श्वान द्वारा आक्रमण। श्वान पर यशोमति का घातक प्रहार।

15. यशोमति द्वारा मयूर और श्वान के मरण पर उनके क्रियाकर्म का निर्देश। शिशुमार द्वारा मत्स्य का पकडा जाना और फिर उसे छोडकर कुब्जा का पैर पकड लेना। फलत धीवरो द्वारा उसका जाल मे पकड लिया जाना।

16. श्वान का कृष्ण सर्प के रूप मे जन्म। उसकी पूछ को मुख मे दबाकर सेलू द्वारा उसका हनन।

17 रोहित मत्स्य को पकाकर श्राद्ध किये जाने का दृश्य।

18. अज (यशोधर) को भी भोजनशाला म लाकर उसके पैर का मास पकाया जाना। यशोधर और चन्द्रमति को स्वर्ग मे सुख देने के लिए यहा मासिक श्राद्ध किया जाना, चण्डमारी मन्दिर मे। अमृतमति का कुष्ट मे पीडित होना।

19. राजा यशोमति का आखेट द्वारा अज-मिथुन का घात।

20. बकरे के एक पैर को काटकर उसका मास यशोमति को दिया जाना। भैसे द्वारा राजा के घोडे का मारा जाना। फलत. राजा के आदेश से पाचक द्वारा उसका मास पकाया जाना। बकरे का भी हनन।

21. यशोमति का भोग-विलास। जगल मे अशोक वृक्ष के नीचे ध्यान स्थित मुनि का दर्शन और वन्दन। चण्डकर्मा के प्रश्न और मुनि द्वारा उसे धर्मोपदेश।

22. कुसुमावलि के गर्भ मे पिंजरबद्ध मुर्गा-मुर्गी का पहुँचना। धार्मिक संस्कारवश महारानी की धार्मिक भावना। अभयरुचि-अभयमति का जन्म व शिक्षा-दीक्षा।

23. सुदत्त मुनि के समक्ष राजा यशोमति का हतप्रभ होकर आत्मसमर्पण। उसकी श्वान-सेना का स्वतः शान्त हो जाना। उसका मित्र श्रेष्ठि से वार्तालाप।

24. सुदत्त मुनि द्वारा सपरिकर यशोमति को उपदेश। अभयरुचि का राज्याभिषेक। अभयमति कन्या का अहिच्छत्र राजकुमार के साथ परिणय।

25. क्षुल्लक-क्षुल्लिका को प्रणाम करते हुए वनदेवी व मारिदत्त।

26. सुदत्ताचार्य के पास वन्दना करते हुए क्षुल्लक-युगल तथा अन्य लोग। वैराग्य और पश्चात्ताप से दग्ध सपरिकर यशोमति।

27. सुदत्ताचार्य से पूर्वजो के भव-भवान्तर जानकर यशोमति द्वारा सपरिकर जिनदीक्षा-ग्रहण।

28. लूणकरण पांड्या मन्दिर मे कल्याणकारी रामचन्द्र आदि का चित्रण।

29. तीर्थंकर की वन्दना करते हुए युगल।

30. तीर्थंकर की वन्दना करता हुआ राजपरिकर।

31-32. लूणकरण मन्दिर, जयपुर मे सुरक्षित पाण्डुलिपि का पृष्ठ भाग और अन्त्य भाग।

१

आदि तीर्थंकर ऋषभदेव का स्तवन।

३ सपरिकर सुदत्ताचार्य की वदना के निमित्त यशोमति का गमन।

४ यज्ञबलि के निर्मित्त एकत्रित पशु-समुदाय युगल।

५ क्षुल्लक-युगल के साथ ही अन्य दृश्य।

६ क्षुल्लक-युगल को पकडने से पूर्व का दृश्य।

९ यशोधर अमृतमती का वार्तालाप।

१० प्रासाद मे यशोधर का वापिस पहुँचना।

११ यशोधर और चन्द्रमती का वार्तालाप विविध प्रसग।

१२ राजा मारिदत्त व बलि-संयोजन से सम्बद्ध निर्देश देते हुए भैरवानन्द।

१३ अमृतमती और कुबडे का प्रणय-प्रसग।

१४ अमृतमती व श्वान द्वारा मयर पर आक्रमण।

१५. सुसुमार का
पकडा जाना।

१६ श्वान का कृष्ण सर्प के रूप मे जन्म, सेलु ने उसकी पूँछ को मुख मे दबाकर मार डाला।

१७ महाराज यशोधर और अमृतमती विविध प्रसग।

१८ चण्डीदेवी के समक्ष बलिदान का दृश्य।

१९ राजा यशोमति का आखेट द्वारा अजमिथुन का घात।

२० [illegible] द्वारा चण्डीदेवी के समक्ष पशु-युगलो के बलिदान का दृश्य।

२१ विविध दृश्यावली।

२२ यशोमति-कक्ष।

२३ सुदत्त मुनि के समक्ष राजा यशोमति का आत्म-समर्पण।

२४ सुदत्त मुनि द्वारा सपरिकर यशोमति को उपदेश, अभयरुचि का राज्याभिषेक, अभयमती का अहिच्छत्र के राजकुमार के साथ परिणय।

२५

क्षुल्लक-क्षुल्लिका को प्रणाम करते हुए वनदवी और मारिदत्त।

२७ निर्ग्रन्थ दीक्षा-दृश्य।

२८ लूणकरण पाण्ड्या मन्दिर का दृश्य।

२९ तीर्थंकर-वन्दना करते हुए युगल।

३० तीर्थंकर-वन्दना करता हुआ राज-परिवार।

३१ पाण्डुलिपि का पृष्ठभाग।

३२ पाण्डुलिपि का सचित्र पृष्ठ।